THE

# KASHI SANSKRIT SERIES

( *HARIDÂS SANSKRIT-GRANTHAMĀLĀ* )

## NO. 143.

( Tantra S'āstra Section No. 2 )

॥ श्रीः ॥

श्रीमच्छङ्करमुखविनिःसृतम्—

# गायत्रीतन्त्रम्

गायत्रीशापोद्धार-गायत्रीकवच-दशमहाविद्यास्तोत्रैः

सम्भूषितम्

धर्मशास्त्राचार्य—

पण्डित तारकनाथभट्टाचार्येण

सम्पादितम्

PUBLISHED BY

JAYA KRISHNA DÂS HARI DÂS GUPTA

*The Chowkhamba Sanskrit Series Office.*

*BENARES.*

*1946*

# निवेदनम्

विदितमेव सर्वेषां विदुषां यत् धर्मार्थकाममोक्षेषु चतुर्ष्वपि पुरुषार्थेषु धर्म एव प्रथमः पदार्थः। यतस्तस्मादेव अर्थकामौ सिद्ध्यतः ततश्च मोक्ष इति।

तदुक्तं व्यासेन—धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते। इति।

तत्र वैदिकेषु बहुलायाससाध्येयु कर्मसु अनेकेषामप्रवृत्त्या अस्मिन्नधर्मप्रचुरे कलिकाले तन्त्रोक्तानां कर्मणामेव श्रेष्ठत्वमुद्घोषयन् देवादिदेवमहादेवः स्वयं श्रीमुखपङ्कजादुक्तवान् महानिर्वाणतन्त्रे—

कलिकल्मषदीनानां द्विजातीनां सुरेश्वरि।
मेध्यामेध्यविचाराणां न शुद्धिः श्रौतकर्मणा॥
न संहिताद्यैः स्मृतिभिरिष्टसिद्धिर्नृणां भवेत्।
सत्यं सत्यं पुनः सत्यं सत्यं सत्यं मयोच्यते॥
विनैवागममार्गेण कलौ नास्ति गतिः प्रिये।
श्रुतिस्मृतिपुराणादौ मयैवोक्तं पुरा शिवे।
आगमोक्तविधानेन कलौ देवान् यजेत् सुधीः॥
कलावागममुल्लङ्घ्य योऽन्यमार्गे प्रवर्त्तते।
न तस्य गतिरस्तीति सत्यं सत्यं न संशयः॥

अपिच तत्रैव—

कलौ तन्त्रोदिता मन्त्राः सिद्धास्तूर्णफलप्रदाः। शस्ताः सर्वेषु कर्मसु जपयज्ञक्रियादिषु॥

एवं तन्त्रोक्तकर्मणां प्राधान्यमवगम्य तेषामेव प्रथमोपादेयतया निरूपणमावश्यकमिति तत्रैव प्रथमः प्रयत्नः समुचित इति कृत्वा अस्मदीयानां गुरुवर्याणामादेशात् प्रवृत्तिरिति।

कलिकातामहानगर्यां रसिकमोहनचट्टोपाध्यायनामकेन विद्वद्वर्येण बङ्गाक्षरमयान्यनेकानि तन्त्राणि संगृहीतानि तेषु गायत्रीतन्त्रतोऽस्य ग्रन्थस्याद्यन्तः पाठः विशोधितः। अपिच वाराणसेयराजकीयसरस्वतीभवनाख्यपुस्तकालयाध्यक्षाणां परमपूज्यचरणमहामहोपाध्याय पं० नारायणशास्त्रिखिस्तेमहोदयानामादेशात् साहाय्येन च तत्रस्थितेभ्यः प्राचीनहस्तलिखितपुस्तकेभ्योऽपि आमूलं शोधितं किन्तु पञ्चमपटलस्थितं तारकाचिन्हितस्थलं कुत्रापि न लब्धं यदि केऽपि विद्वांसः मूलग्रन्थसाहाय्येन तत्पूरयितुं शक्नुयुस्तर्हि कृपया आवेद्य उपासकानां महदुपकारं साधयिष्यन्ति।

तन्त्रमिदं गायत्रीशापोद्धारकवचादिना तथा कैवल्यप्राप्तास्मत्पितृचरणश्रीमत्स्वामिभैरवानन्दगिरिविरचितैर्दशमहाविद्यास्तोत्रैश्च सनाथीकृतम्। अत्र दृष्टिदोषेण अज्ञानेन वा सीसकाक्षरसंयोजकदोषेण वा सम्भाविताः सहजास्त्रुटीः क्षाम्यन्तु गुणैकपक्षपातिनो भवन्तः, प्रोत्साहयन्तु च मुद्रकं प्रकाशकं च श्रेष्ठिनं श्री जयकृष्णदासगुप्तमहोदयमिति मदीया अभ्यर्थना।

श्रीकृष्णजन्माष्टमी<br>वि० सं० २००३

विदुषामनुचरः—
**तारकनाथभट्टाचार्यः।**

अथ

# दशमहाविद्यास्तोत्रम्

(१)

विगलितवसना लोलितरसना कटितटबद्धकराली
समधिकचण्डा करधृतमुण्डा खण्डितचन्द्रकपाली ।
मार्भैर्माभैरिति भैरवरवसम्भासितविबुधाली
पुरहरहृदये विकचकुवलये भ्रमति भ्रमरी काली ॥

(२)

प्रलयजलधिजलदोदरसोदररुचिरचिरद्युतिहारा
खर्वाकृतिरहिवलयकमूर्द्धजततिरतिसंसृतिसारा ।
घोराघोरशिवारवनन्दथरतिशयशोणितधारा
जय दुस्तरभवजलनिधितरणे भमतु भवतु खलु तारा ॥

(३)

विधिहरिहरधृतसिंहासनगतशवशिवनाभिमृणाले
निवससि शशिरुचिरुचिरे दिक्शुचिदशने सुचिकुरजाले ।
यौवनगौरवसमधिकसौरभशालिनिशिशुशशिभाले
जय षोडशि शङ्करि देवि शुभङ्करि सुरपुरकुसुमितमाले ॥

(४)

केशरि पृष्ठे महतिगरिष्ठे नियतं निवससि वामा
भुवनमनोहरसमधिकसुन्दररुचिरतिमध्यक्षामा ।
देवीकामविनाशनकारणमपि पूरितजनकामा
त्वं भुवनेश्वरि जननि महेश्वरि भवसि गुणत्रयधामा ॥

(५)

शोणितवर्णे शोणितवसने स्तनयुगशोणितधारे
जपगुटिकावरविद्याभयकर पद्मे त्रिभुवनसारे ।
मातर्भैरवभामिनि भैरवभानुसहस्रककारे
नृमुण्डमाले हास्यकराले त्वं गतिरिह संसारे ॥

( ६ )

स्वकरकलितकरवालविखण्डितमात्मशिरोनिजहस्ते
कृत्वा निजगलविगलितशोणितपानपरासि विमस्ते ।
रतिरतिनाथे रतिविपरीते नृत्यसि मोहपरास्ते
भावमसम्भवमिच्छामि त्वयि ईश्वरि देवि नमस्ते ॥

( ७ )

उच्चैर्घोणा कोटरनयना दीना विधवावेशा
करधृतसूर्पा समधिकदर्पा काकध्वजरथवासा ।
रक्तापाङ्गा कलहासङ्गा रूक्षा कुञ्चितकेशा
धूमावति सा प्रभवति भवती प्रतिपद्भीतमहेशा ॥

( ८ )

कुण्डलमण्डितगण्डविराजितमनुपमरूपमपूर्वम्
निर्जितचपले चम्पकमृदुले मनसिजमहिलागर्वम् ।
करकलितासुररसने भीषणमुद्गरमरिबलखर्वम्
धरसि हरसि ननु बहसि च भक्ते वितरसि कृपया सर्वम् ॥

( ९ )

वाणीसिद्धिविधायिनि दायिनि नियतेर्भगवति विद्ये
पाशाङ्कुशखेटकपटुशानितखड्गकरे सकलाद्ये ।
शिशुशशिधारिणि दुरितनिवारिणि दुस्तरसंसृतिमध्ये
मातङ्गि त्वं सङ्कटमपहरदनुजदलन आराध्ये ॥

( १० )

विकचकमलकुलकलिकोपरिहरिदयितालम्बितकेशा
करिकरकलसोत्थितसलिलाद्रितपूतविसारितवेशा ।
रक्ताम्बरधरपीनपयोधरवरतनुमृदुमृदुहासा
करधृतकमला विमला कमला रूपमहोदधिशेषा ॥

दशविधमूर्त्तिं धरसि सुकीर्त्ते दुर्गतिनाशिनि दुर्गे
नानामाये स्मरहरजाये क्रीडसि नियतनिसर्गे ।
समधिकदीनं मतिगतिहीनं कृपणं करुणापात्रम्
कुरु सति सम्प्रति करुणां मां प्रति मम याचनमतिमात्रम् ॥

इति श्रीमद् १०८ स्वामी भैरवानन्दगिरिविरचितं दशमहाविद्यास्तोत्रं समाप्तम् ।

मुद्रकः—विद्याविलास प्रेस, बनारस सिटी । १……

# अथ गायत्रीशापोद्धारः ।

अस्य गायत्रीशापविमोचनमन्त्रस्य ब्रह्मऋषिर्गायत्रीछन्दो वरुणो-देवता ब्रह्मशापविमोचनेविनियोगः । ॐ यद्ब्रह्मेति ब्रह्मविदोविदुस्तां पश्यन्ति धीराः सुमनसो वा गायत्रि त्वं ब्रह्मशापात् विमुक्ता भव । वशिष्ठशापविमोचनमन्त्रस्य वशिष्ठऋषिर्वशिष्ठोदेवता वशिष्ठशापवि-मोचने विनियोगः ।

ॐ अर्कज्योतिरहं ब्रह्म ब्रह्मज्योतिरहं शिवः ।
शिवज्योतिरहं विष्णुर्विष्णुज्योतिः शिवः परः ॥

गायत्रि त्वं वशिष्ठशापात् विमुक्ता भव। ॐ विश्वामित्रशापविमोच-नमन्त्रस्य विश्वामित्रऋषिराद्या देवता विश्वामित्रशापविमोचने विनियोगः।

ॐ अहोदेवि महादेवि दिव्ये सन्ध्ये सरस्वति ।
अजरे अमरे चैव ब्रह्मयोनि नमोऽस्तु ते ॥

गायत्रि त्वं विश्वामित्रशापात् विमुक्ता भव ।

इति गायत्रीशापोद्धारः

---

# अथ गायत्रीकवचम् ।

ॐ गायत्री पूर्वतः पातु सावित्री पातु दक्षिणे ।
ब्रह्म सन्ध्या तु मे पश्चादुत्तरे तु सरस्वती ॥
पावकी मे दिशं पातु पावकी जलशायिनी ।
यातुधानी दिशं रक्षेत् यातुधानी भयङ्करी ॥
पावमानी दिशं रक्षेत् पापानाञ्च विनाशिनी ।
दिशं रौद्री सदा पातु रुद्राणी रुद्ररूपिणी ॥
ऊर्द्ध्वं ब्रह्माणी मे रक्षेदधस्ताद् वैष्णवी तथा ।
एवं दशदिशोरक्षेत् सर्वाङ्गे भुवनेश्वरी ॥
तत्पदं पातु मे पादं जङ्घे मे सवितुः पदम् ।
वरेण्यः कटिदेशन्तु नाभिं भर्गस्तथैव च ॥
देवस्य मे पातु हृदं धीमहीति जलं तथा ।
धियो यो इति मे नेत्रं नःपदन्तु ललाटकम् ॥
एवं पादादिमूर्द्धान्तं मूर्द्धानं मे प्रचोदयात् ।
इदन्तु कवचं पुण्यं हत्याकोटि विनाशनम् ॥
चतुःषष्टिकला विद्या सर्वपापप्रणाशिनी ।
जपारम्भे च गायत्री जपान्ते कवचं पठेत् ॥
गोस्त्रीब्रह्मवधादीनि मित्रद्रोहादिपातकैः ।
मुच्यते सर्वपापेभ्यः परं ब्रह्माधिगच्छति ॥

इति श्री गायत्रीकवचं समाप्तम् ।

---

॥ श्रीः ॥

श्रीमच्छङ्करमुखविनिःसृतम्—

# गायत्रीतन्त्रम् ।

श्रीदेव उवाच-अधुना संप्रवक्ष्यामि गायत्रीं परमाक्षरीम् । स्मरणात् सर्वपापेभ्यो मुक्तो भवति तत्क्षणात् । अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् यथा तथा । गायत्रीं प्रजपेद्धीमान् जपात् पापं निकृन्तति । मननात् पापतस्त्राति मननात् स्वर्गमश्नुते । मननान्मोक्षमाप्नोति चतुर्वर्गमयो भवेत् । रूपादितत्त्वसहितां गायत्रीं परमाक्षरीम् । चतुर्भुजां शशिकलां जटाजूटसमन्विताम् । ऋक्सामयजुरासीनां प्रफुल्लपङ्कजेक्षणाम् । पञ्चाशद्वर्णग्रथितां मालाद्योतितहृत्स्थलाम् । अनेकवर्णनिर्माणकण्ठदेशविराजिताम् । दिव्यगन्धप्रलिप्ताङ्गीं शुक्लवस्त्रपरिच्छदाम् । शुक्लपद्मसमासीनां शुक्लवस्त्रोत्तरीयिणीम् । ब्रह्मादिदेवतावृन्दैः संस्तुतां नित्यनूतनाम् । एवं ध्यात्वा न्यसेद्वर्णं पठित्वा छन्द उत्तमम् । ओं अस्या अग्निमुखीगायत्र्याः परं ब्रह्म-ऋषिः ऋग्यजुःसामाथर्वच्छन्दःसवितादेवता परं ब्रह्ममातुर्न्यासे विनियोगः ॥ पादादिमस्तकान्तस्य न्यासं कुर्य्याद्विशालधीः । विना न्यासं जपेद्यस्तु गायत्री निष्फला भवेत् । विना मुद्रां न्यसेद् यस्तु न्यासी भवति निष्फलः ॥ यतिश्च पञ्चमुद्राभिर्न्यासं कुर्य्यात् प्रयत्नतः । गृही च यत्नतः कुर्य्यात् त्रिसन्ध्यं तत्त्वमुद्रया । कनिष्ठानामिकाङ्गुष्ठा अङ्गुष्ठा तर्जनी तथा । अङ्गुष्ठमध्यमायुक्ता अङ्गुष्ठानामिका तथा । कनिष्ठाङ्गुष्ठसंयोगात् पञ्चमुद्राः प्रकीर्त्तिताः । पादादिमस्तकान्तश्च ओं भूर्भुवः स्वर्न्यसेत् सुधीः । सप्तधा विन्यसेद्विद्वान् गायत्रीं क्रमतस्ततः । पादाङ्गुष्ठे न्यसेद्योगी तत्कारं भावतत्परः । सकारं चाङ्गुलयोर्मध्ये विकारं जङ्घयोस्तथा । तुकारं जानुनोर्मध्ये र्वकारं मध्यदेशतः । रेकारं गुह्यदेशे च णकारं वृषणे न्यसेत् । यंकारं कटिदेशे च भकारं नाभिमण्डले । र्गोकारं जठरे न्यस्य देकारं स्तनयोर्न्यसेत् । वकारं हृदि देशे च स्यकारं कण्ठतो न्यसेत् । धीकारं वदने भद्रे मकारं जानुनि न्यसेत् । हिकारं नासिकाग्रे च धिकारं चक्षुषोर्न्यसेत् । योकारं प्रथमं योगी भ्रुवोर्मध्ये च विन्यसेत् । द्वितीयं तच्च विज्ञेयं ललाटे च न संशयः । नःकारश्च मुखे ज्ञेयं प्रकारं दक्षिणामुखम् । चोकारं पश्चिमे तद्वद्दकारं चोत्तरामुखम् । यातकारं मूर्ध्नि विज्ञेयं सर्वं व्याप्य व्यवस्थितम् । तत्कारं चम्पकापीतं ब्रह्मविष्णुशिवात्मकम् । सकारं चिन्तयेच्छ्यामं विकारं कपिलं तथा । तुकारं इन्द्रनीलाभं र्वकारं

वह्निसन्निभम् । रेकारं वह्निसङ्काशं णकारमतिनिर्मलम् । यंकारं तड़िदाकारं भकारं कृष्णमेव च । गोंकारं रक्तवर्णञ्च देकारं श्यामलं तथा । वकारं शुक्लसङ्काशं स्यकारं श्यामलं तथा । धींकारं कुन्दपुष्पाभं मकारं शुक्लमेव च । हिकारं चन्द्रसङ्काशं धिकारं पीतमेव च । योकारं तडिदाकारं योकारं धूम्रवर्णकम् । अशेषं शोधयेत् पापं वायुबीजं यथा तथा । नःकारेन्द्रमुखं प्रोक्तं प्रतप्तकनकप्रभम् । नःकारस्य समीपेषु बिन्दुद्वयविभूषितम् । ऊर्द्धबिन्दू रक्तवर्णमधः श्यामः प्रकीर्त्तितः । नीलोत्पलदलश्यामं प्रकारं दक्षिणामुखम् । सौम्यं गोरोचनापीतं चोकारं पश्चिमामुखम् । शुक्लशङ्खसमाकारं दकारं चोत्तरामुखम् । यात्कारं मूर्ध्नि विज्ञेयं ऊर्द्धास्यं ब्रह्ममन्दिरम् । ब्रह्मविष्णुशिवादीनामालयं तत्त्वसंयुतम् । प्रणवत्रयसंयोगाद्‌ गायत्री त्रिपदा तथा । यथा सन्ध्यात्रयं नित्यं प्राणायामत्रयं तथा । त्रयमाचमनं भद्रे यथावर्णगुणत्रयम् । प्रणवत्रयसंयुक्तां गायत्रीं त्रिपदां तथा । आद्यन्ते प्रणवं दत्त्वा प्रजपेदनिशं द्विजः । चतुर्विंशाक्षरी विद्या परतत्त्वविनिर्मिता । तकारात् यात्कारपर्य्यन्तं शब्दब्रह्मस्वरूपिणी । परस्य ब्रह्मणो माता गायत्री परदेवता । प्रसुप्तभुजगाकारा बिसतन्तुसमाकृतिः । पञ्चाशद्वर्णसंयुक्तं गायत्रीनिर्मितं वपुः । आधारपद्ममध्यस्था विद्युत्पुञ्जप्रदीपिका । महापद्मवनमयी महापापविमोचनी । महापुण्यमयी नित्या सच्चिदानन्दरूपिणी गायत्री पातु वो नित्या ह्यशेषपापनाशिनी । गायत्री अजपा विद्या प्रणवं भूर्भुवः स्वरः । ततः प्रणवमुद्धृत्य सुमेरुः सेतुरूपकः । ओं तत्सवितुर्व्वरेण्यं भर्गोदेवस्य धीमहि, धियो यो नः प्रचोदयात् ओं । प्रणवं प्रजपेद्धीमान् पापोच्चाटनकर्मणि । प्रणवत्रयसंयुक्ता ब्राह्मणेषु प्रकीर्त्तिता । तत्रादौ परमेशानि सर्वत्र प्रणवद्वयम् । त्रिपदानाम गायत्री ब्रह्मविद्या पुरातनी । सगुणापि गुणातीता प्रणवत्रयसंयुता । अतएव महेशानि त्रिपदा परिकीर्त्तिता । द्विपदा त्ववशेषेषु प्रणवद्वयसंयुता ।प्रकृष्टनूतनो वर्णो नित्यनूतनविग्रहः । अर्द्धमात्रा धृता बिन्दुब्रह्मविष्णुशिवात्मिका । प्रणवः कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः ॥

श्रीदेव उवाच—गायत्र्याः प्रथमं वर्णं पीतचम्पकसन्निभम् । अग्निना पूजितं वर्णमाग्नेयं परिकीर्त्तितम् । त्सकारं द्वितीयं भद्रे सं प्रजापतिपूजितम् । प्राजापत्यं कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः । तृतीयं कपिलं वर्णं सोमेन परिपूजितम् । तेन सौम्यं महेशानि कथ्यते तत्त्वदर्शिभिः । इन्द्रनीलसमप्रख्यं चतुर्थं वेदपूजितम् । ईशेन पूजितं नित्यं ऐशान्यं तेन कथ्यते । पञ्चमं परमेशानि ज्वलदग्निसमप्रभम् । आदित्यपूजितं वर्णं आदित्यं तेन कथ्यते । षष्ठञ्च वह्निसङ्काशं मं बृहस्पतिपूजितम् । बार्हस्पत्यं कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः । सप्तमं निर्मलं वर्णं इन्द्रेण

परिपूजितम्। तेन ऐन्द्रयं महेशानि कथ्यते तत्त्वदर्शिभि। अष्टमं तड़िदाकारं पितृदेवेन पूजितम्। कथ्यते पैतृदैवत्यं मुनिभिस्तत्त्वदर्शिभिः। नवमं कृष्णवर्णाभं अर्य्यम्णा परिपूजितम्। कथ्यते आर्य्यमणं तेन मुनिभिस्तत्त्वदर्शिभिः। दशमं रक्तवर्णाभं सावित्र्या परिपूजितम्। कथ्यते तेन सावित्र्यं मुनिभिस्तत्त्वदर्शिभिः। ऐकादशं श्यामवर्णं त्वष्ट्रा च परिपूजितम्। तेन तैः कथ्यते त्वाष्ट्र्यं मुनिभिस्तत्त्वदर्शिभिः। द्वादशं शुक्लवर्णाभं सदा पूष्णा प्रपूजितम्। तेन तैः कथ्यते पौष्णयं मुनिभिस्तत्त्वदर्शिभिः। त्रयोदशं श्यामवर्णं इन्द्राग्निपरिपूजितम्। कथ्यते तेन मुनिभिरैन्द्राग्नेयं सुलोचने। चतुर्दशं शङ्खसङ्काशं वामदेवेन पूजितम्। वामदेव्यं कथ्यते तैर्मुनिभिस्तत्त्वदर्शिभिः। पञ्चदशं शुक्लवर्णं वायुना परिपूजितम्। कथ्यते तेन वायव्यं मुनिभिस्तत्त्वदर्शिभिः। षोड़शं चन्द्रसङ्काशं मित्रावरुणपूजितम्। अतो वै मैत्रावरुणं कथ्यते तत्त्वदर्शिभिः। सप्तदशं पीतसङ्काशमङ्गिरसः प्रपूजितम्। कथ्यते आङ्गिरसं तेन मुनिभिस्तत्त्वदर्शिभिः। अष्टादशं तड़िद्वर्णं विश्वदेवेन पूजितम्। वैश्वदेवं कथ्यतेऽतो मुनिभिस्तत्त्वदर्शिभिः। एकोनविंशं धूम्राभं विष्णुना परिपूजितम्। वैष्णवं कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः। प्रतप्तकनकप्रख्यं विंशं वासवपूजितम्। कथ्यते वासव्यं तेन मुनिभिस्तत्त्वदर्शिभिः। नीलोत्पलदलश्यामं एकविंशं वरानने। इष्टभैः पूजितं वर्णं ऐष्टभ्यं तेन कथ्यते। द्वाविंशं रोचनापीतं कुबेरपरिपूजितम्। कथ्यते तेन कौबेरं मुनिभिस्तत्त्वदर्शिभिः। त्रयोविंशं शङ्खसङ्काशमश्विनोकुमारपूजितम्। आश्विनं कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः। चतुर्विंशं रक्तवर्णं ब्रह्मणा परिपूजितम्। तेनैव कथ्यते ब्राह्मम् मुनिभिस्तत्त्वदर्शिभिः। सर्ववेदमयो विद्या गायत्री परदेवता। परस्य ब्रह्मणो माता सर्ववेदमयी सदा। गायत्र्या पुटितं कृत्वा इष्टमन्त्रं जपेच्छ तम्। एतज्जपं महेशानि आधाराधेयमुत्तमम्। विनाधारं महेशानि आधेयञ्च विना तया। नाधारं सिध्यते भद्रे नाधेयञ्च सुसिध्यति। सर्वेषु विष्णुमन्त्रेषु शैवे शाक्तेषु सुन्दरि। सौरे गाणपतौ भद्रे शस्यते वरवर्णिनि। अञ्जनात् सुलोचनो यस्तु झटिति प्रविशेद् गृहम्। न पश्यच्चक्षुषा किञ्चिद् गृहमध्येषु यत् स्थितम्। पश्येत् स्थूलान्तरे विद्वान् गृहमध्येषु यत् स्थितम्। एवमाधारमाधेयं यः करोति द्विजातिकः। अङ्कुरो जायते भद्रे लक्षजापान्न संशयः। न च जीवात्मनो भिन्ना गायत्री ब्रह्मरूपिणी। गायत्र्या न हि भिन्नः स्याज्जीवात्मा तत्स्वरूपिणी। सर्वदा उभयोरेकं नारिकेले यथोदकम्। द्विजातिः कथ्यते वेदे अतएव हि ब्राह्मणः। यथा स्पर्शमणिस्पर्शात् ताम्रोऽपि काञ्चनं सदा। गायत्रीसहितश्चात्मा द्विजात्मा तेन ईरितः। चन्द्रसूर्योपरागे च जप्त्वा ब्रह्ममयो भवे

त् । मन्त्रस्य परमेशानि न च होमादिकं दश । कृते होमादिके भद्रे तज्जपं विफलं यथा । जपमात्रे महेशानि अनन्तं तन्मनुं यथा । अनन्तस्य महेशानि दशांशं केन जायते । गायत्र्या रहितो यस्तु जपपूजादिका वृथा । कोट्युपलक्षणं भद्रे अनन्तं ग्रहणे भवेत् । हविराप्राप्तिमात्रेण यथा वह्निः प्रदीप्यते । आधाराधेयसम्बन्धान्मन्त्रः प्रज्वलितस्तथा । विना हविर्विना काष्ठं कथं वह्निः प्रदीप्यते । तन्त्वजेनैव गायत्र्या शूद्रोऽपि प्रजपेन्मनुम् । आधाराधेयमेतत् ते कथितश्चातिभक्तितः । विना चाधाराधेयं वै प्रजपेद् यदि मूढधीः । शतकोटिजपेनैव तस्य विद्या न सिध्यति ॥

श्रीदेव्युवाच । श्रुत्वा चागमशन्दर्भं आगता सा सुलोचना । किमुक्तं देव योगेन्द्र हेरम्बाय वदस्व तत् । यदि नो कथ्यते देव मम दिव्यं तदास्तुते ।

श्रीदेव उवाच-लम्बोदर महाबाहो शृणुष्व मधुरं वचः । इदमागमसन्दर्भं मम वक्त्राद्विनिर्गतम् । निर्गतं पार्वतीवक्त्रात् तन्त्रं परमदुर्लभम् । विलिख्य बहुयत्नेन गच्छ सिद्धाश्रमं सुत । यत्र तिष्ठन्ति मुनयो वेदवेदाङ्गपारगाः । अणिमादिगुणैर्युक्तः शीघ्रं भवतु हे सुत । इत्युक्ते शङ्करे देवे अष्टबाहुरभूत्ततः । विलिख्य चतुरैर्हस्तैः शिवायविनिवेदयेत् । पञ्चाशन्मातृका कन्या तन्त्रादाविरभूत् क्षणात् तां दृष्ट्वा तस्य देवस्य जायते लिङ्गवर्द्धनम् । विधृत्य लिङ्गं तस्याङ्कं प्रजप्य अणिमामनुम् । सूक्ष्मत्वं प्रययौ शीघ्रं गणेशस्य निरन्तरम् । गच्छ पुत्र महाबाहो तन्त्रमादाय सत्वरम् । प्रणम्य प्रययौ शीघ्रं तन्त्रमादाय सत्वरम् । सिद्धाश्रमं वनं रम्यं यथेन्द्रस्य च नन्दनम् । दृष्ट्वा गणेशं ते विप्रा विस्मयोत्फुल्ललोचनाः ॥

विप्रा ऊचुः-भाग्यादागमनं देव कृपयागमनं वद । इत्युक्त्वा पूजयामास तं देव शिवनन्दनम् । षोड़शैरुपचारैश्च गणेश पूजेयुर्द्विजाः । अणिमादिमहामन्त्रैः पूजेयुः शिवनन्दनम् । ध्यात्वा पाद्यादिकं दत्त्वा अणिमादिं जपेन्मनुम् । सिन्दूरवर्णसकाशं योगपट्टसमन्वितम् । लम्बोदरं महाकायं मुखं करिकरोपमम् । अणिमादिगुणैर्युक्तं चाष्टबाहुं त्रिलोचनम् । विजयाविधृत लिङ्ग मोक्षकामाय पूजयेत् । ओं अं गणपतये स्वाहा । ओं लं गणपतये स्वाहा । ओं व्यां गणपतये स्वाहा । ओं प्रां गणपतये स्वाहा । ओं मं गणपतये स्वाहा । ओं ईं गणपतये स्वाहा । ओं वं गणपतये स्वाहा । ओं कां गणपतये स्वाहा । ८ । अनेनैव हि मन्त्रेण पूजयेद्गणनायकम् । अणिमाद्यष्टमन्त्रैश्च अष्टबाहुं प्रपूजयेत् । अं अणिम्ने नमः स्वाहा । लं लघिम्ने नमः स्वाहा । प्रां प्राप्त्यै नमः स्वाहा । प्रां प्राकाम्याय नमः स्वाहा । मं महिम्ने नमः स्वाहा । ईं

ईशित्वाय नमः स्वाहा। वं वशित्वाय नमः स्वाहा। कां कामवसायितायै नमः स्वाहा। एवं संपूज्य विधिवत् सस्त्रीका मुनयो जये। भोजयित्वा विधानेन नाना मिष्टफलादिभिः। परमान्नपिष्टकैरन्यैर्दधिदुग्धघृतादिभिः। दिव्यगन्धमयैः पुष्पैर्दिव्यगन्धप्रलेपनैः। मूषिकं पूजयामास नानामिष्टफलादिभिः। ओं मं मूषिकाय गणाधिपवाहनाय धर्मराजाय स्वाहा। इत्यनेनैव मन्त्रेण मूषिकं पूजयेत् सदा। अनेनैव विधानेन तुष्टोऽभूच्छिवनन्दनः। हे विप्राश्च सपत्नीकाः। किमिच्छथ वरञ्च मे॥

विप्रा ऊचुः। देहि मे परमं ज्ञानं तन्त्रं यच्छिवभाषितम्। एवं भक्ष्याणि द्रव्याणि नित्यं दास्यामि ते विभो॥

मुनेर्वाक्यं ततः श्रुत्वा तत् तन्त्रं मुनये ददौ। एवं तन्त्राणि सर्वाणि विलिख्य विनिवेदयेत्। पूजेयुः प्रत्यहं विप्रा यन्त्रे मूर्त्तिं विलिख्य वै। सर्वाङ्गसुन्दरं मूर्त्तिं अष्टबाहुसमन्वितम्। त्रिकोणमध्ये तन्मूर्त्तिं हेरम्बयन्त्रनिर्णयम्। श्रुत्वा जया-विजया वाक्यं हर्षगद्गदमानसः। एतत् ते कथिताः सर्वा जयायै विजया तदा। पूजितं येन विधिना लिङ्गं तस्माद्द्विजोत्तमः। तत् सर्वं कथ्यतां देव यदि तेऽस्ति दया मयि॥

देव उवाच ओं नमो लिङ्गाय महते अणिमादिगुणैर्युते। पाद्यादीनि क्रमाद्द्यान्मन्त्रेणानेन भक्तितः खर्जूरार्द्धासनं लिङ्गं कन्दर्पज्वरनाशनम्। अणिमादिगुणैर्युक्तं ब्रह्मोपेन्द्रादिसेवितम्। यथा मन्त्रं प्रवक्ष्यामि जप्त्वा भोगमयो भवेत्। मायाबीजं समुद्धृत्य लिङ्गाय तदनन्तरम्। पुनर्मायां समुद्धृत्य अष्टोत्तरशतं जपेत्। अष्टोत्तरशतं जप्त्वा शृङ्गारे मदनोपमः॥

ततः परं प्रवक्ष्यामि स्त्रीमन्त्रं गुणशालिनम्। कामबीजं समुद्धृत्य भगरूपिणि पदं ततः। चन्द्रिकामं गतं वामं अर्द्धबिन्दुसमन्वितम्। कथितमुभयोर्मन्त्रमुभयोः प्रीतिदायकम्। मन्त्रहीने च या क्रीड़ा सा क्रीड़ा पशुवत् सदा। लिङ्गतत्त्वमविज्ञाय शिवलिङ्गं प्रपूजयेत्। यथा तस्य वृथा पूजा गायत्रीरहितस्तथा। मनोबुद्धिः पुष्पयुतं तत्पद शिवपूजने। सपदं विलिखेच्छक्ति वेदित्रयस्रे च पूजकः। सपद विलिखेच्छून्यं (सूर्य्यं) लिङ्गं मूर्द्धनि यत्नतः। तदैव शिवलिङ्गस्य ध्यानेनोक्तावयं भवेत्। जीवन्यासं तदा देवि निश्चयं नात्र संशयः। अनेन विधिना भद्रे यः पूजयति शङ्करम्। स सम्यक् फलमाप्नोति सर्वपूजाफलं लभेत्। सशून्यं पूजितं तेन जीवात्मा शुद्धतामियात्। ध्यानत्रयं विना देवि निष्फलं शिवपूजनम्। ध्यानत्रयं प्रवक्ष्यामि अत्यन्तगोपन शृणु॥

शुक्लकृष्णारुणाभासां चतुर्बाहुधरां पराम्। शुक्लाम्बरपरीधानां कटाक्षविशिखोज्ज्वलाम्। नानाभरणशोभाढ्यां मङ्गलां मङ्गलप्रदाम्। शङ्खेन्दुकुन्दसङ्काशां चित्रांशुकपरिच्छदाम्। शरच्चन्द्रप्रसन्नास्यां चित्रवेणीविरा-

जिताम्। नानाभरणशोभाढ्यां लसत्कोकनदेक्षणाम्। चतुर्बाहुधरां दिव्यां ध्यायेच्छिवस्वरूपिणाम्। शरच्चन्द्रप्रतीकाशां कृष्णांशुकपरिच्छदाम्। द्विभुजां स्वर्णवर्णाढ्यां लसत्पद्मदलेक्षणाम्। ध्यायेज्ज्योत्स्नां महामायामणिमासिद्धिरूपिणीम्। अणिमाद्यष्टसिद्धिश्च रजःसत्वतमोगुणाः। ज्ञात्वा यः कुरुते देवि श्लोके श्लोके च योजनाम्। तदा फलमवाप्नोति पुराणस्य च नान्यथा। अष्टसिद्धिपरिज्ञानं विना पुस्तकवाचनम्। यः करोति महामूर्खः कुक्कुरध्वनिवद्ध्वनिः। विना न्यासं महेशानि प्राणायामं विना तथा। शून्यं पूजनमात्रेण सर्वं याति पवित्रताम्। लिङ्गतत्त्वमविज्ञाय शिवलिङ्गं प्रपूजयेत्। सा पूजा मृत्तिकापूजा जीवात्मा अपवित्रता। शिवशक्तिमयंलिङ्गं निर्माणसदृशं फलम्। मनोबुद्धिमयं लिङ्गं सह दृष्टा भवेद् यदा। सदृशं कथ्यते तेन मुनिभिस्तन्त्रकोविदैः। ध्यात्वा शिवं महादेवं श्वासं पुष्पे विनिक्षिपेत्। तत् पुष्पं परमेशानि शिवाय विनिवेदयेत्। तदैव सहसा जीवः शुद्धो भवति पूजने। तदैव सहसा जीवो लोचनस्य च गोचरः। मुकुरेऽपि तथा भद्रे स्थूलदेहनिरीक्षणम्। शिवलिङ्गे तथा भद्रे आत्मनैवात्मदर्शनम्। घृतपूर्णे ताम्रभाण्डे पलैर्द्वादशनिर्मिते। प्रत्येकं पात्रे निःक्षिप्य शिवलिङ्गं समर्चयेत्। संपूज्य विधिवद्भक्त्या वाक्यं कृत्वा च पूजने। कोटिलिङ्गस्य पूजायाः सम्पूर्णफलमाप्नुयात्। अनेन विधिना कृत्वा कोटिपूजाफलं लभेत्॥

श्रीदेव्युवाच–देवदेव महादेव संसारार्णवतारक। यदि न पूजने शक्तो युगभेदक्रमेण च। लक्षलिङ्गं समभ्यर्च्य कोटिलिङ्गमथापि वा। यदि तस्य फलं व्यर्थं किं भविष्यति मे वद॥

श्रीदेव उवाच–निर्माय द्वादशं लिङ्गं शुद्धस्वर्णेन सुन्दरि। तोलकं तोलकं कृत्वा दद्याद्दक्षपारगे। तदैव कोटिपूजायाः फलमाप्नोति पूजकः। निष्फलं जायते सर्वं जपपूजनवाचनम्। यथा तस्य भवेद् व्यर्थं शिवपूजां विना तथा। विफलं जायते सर्वं दिनकृत्यं दिने दिने। शिव शक्त्यात्मकं जीवं यः पश्यति स वैष्णवः। अनेन विधिनात्मानं यस्तु पश्यति तत्पदे। स स्नातः सर्वतीर्थेषु सर्वयज्ञेषु दीक्षितः। सर्वज्ञानमयः सोऽपि सर्वधर्ममयश्च सः। अनेन विधिना पूजा जायते परमात्मनः। यथा ज्ञानात्मनः पूजा पूजा हि श्चन्तरात्मनः। आत्मनैवात्मनः पूजा प्रथमं शिवपूजने। लिङ्गस्य दक्षिणे वामे विलिख्य कुसुमद्वयम्। परंब्रह्म स्वयं लिङ्गं भवत्येव न चान्यथा। पूजनं शिवषट्कानां अनेन विधिना भवेत्। आत्मान्तरात्मा परमज्ञानात्मा षट्शिवास्तथा। संपूज्य प्रथमं भद्रे ततोऽष्टौ संप्रपूजयेत्। नित्यकर्मफलं प्राप्य काम्यकर्मफलं लभेत्॥

श्रीदेव्युवाच—शव इत्यक्षरे ब्रह्मवाचकः प्रेतनिर्णयः। मङ्गलासरिता

ज्योत्स्ना यदा भवति सुन्दरः। शिव इत्यक्षरो ब्रह्मवाचको ब्रह्मनिर्णयः। तदा शवो महादेवः शिवोऽभूत् सहसा प्रभो। कृपया कथयेशान वर्णद्वयविनिर्णयम्। अज्ञात्वा वर्णद्वयं देव पूजने शवपूजनम्॥

श्रीदेव उवाच-कलौ चतुर्गुणं कृत्वा यदि न पूजयेच्छिवम्। कोटिपूजाफलं हन्ति किं तस्य काम्यकर्मणि। ज्ञात्वा यः परमेशानि वर्णद्वयविनिर्णयम्। अन्यथा चाभवत् पूजा प्रेतवत् फलदायिनी। शिवरूपो महादेवः शक्त्या युक्तो भवेद् यदि। तदा प्रभवितुं शक्तः ईश्वरः कार्य्यकारकः। शङ्खेन्दुकुन्दसङ्काशं शिवङ्कान्तमितीरितम्। दलिताञ्जनसंकाशं सविशान्तमितीरितम्। पञ्चाशन्मातृकामध्ये तिस्रो वर्णा नगात्मजे। विषमा च हरो वर्णो मङ्गला च तथैव च। कोणविंशतिसंयुक्ता मङ्गला च हरस्तथा। दशाष्टकोणसंयुक्ता विषमा कमलेक्षणा। विशेषं तत्र वक्ष्यामि तालव्यस्य च साधनम्। वामा ज्येष्ठा तथा रौद्री बिन्दुत्रयविनिर्मिता। वामासु संगता रौद्री रौद्री ज्येष्ठासु संगता। पञ्चभूतमयी नित्या मङ्गला षट्शिवात्मिका। वामासु संस्थितो ब्रह्मा विष्णुर्ज्येष्ठासु संस्थितः। रौद्रीषु संस्थितो रुद्रो गुणत्रयविनिर्णयः। वामाज्येष्ठासन्धिशून्ये ईश्वरो गुणवर्जितः। रौद्रीज्येष्ठासन्धिशून्ये त्रिगुणश्च सदाशिवः। यः शिवः परमब्रह्म पञ्चशून्ये विजृम्भते। चतुष्कोणात्मके ऊर्द्ध्वे आत्मनः स्थितिनिर्णयः। अधोभागे चतुष्कोणे निवासश्चान्तरात्मनः। दक्षभागे चोर्द्धकोणे परमात्मा वसेत् सदा। अधोभागे चतुष्कोणे ज्ञानात्मा निवसेद् ध्रुवम्। ऊर्द्धरेखाद्वये देवि चतुष्कोणे मनः स्थितिः। सर्ववेत् सर्वगामि मनः सर्वत्र कथ्यते। एकादशेन्द्रियाणाञ्च पञ्चभूतेषु संस्थितिः। पञ्चभूतेषु भूतानां स्थितिरेव न संशयः। विष्णुविन्दुगता ज्योत्स्ना यदा भवति सुन्दरि। तदासि चञ्चलापाङ्गि कथ्यते तन्त्रदर्शिभिः। ईशित्वंच शिवः शक्तिर्मङ्गलान्ते भवेत् यदि। शिवेति कथ्यते नाम मुनिभिस्तन्त्रकोविदैः। वामा रजोगुणा नित्या तरुणादित्यसन्निभा। ज्येष्ठा सत्त्वगुणा नित्या शरच्चन्द्रप्रदीपिका। दलिताञ्जनसङ्काशा रौद्री तमोगुणा स्मृता। विषमा च हरे चैव भावनात् सिद्धिरुत्तमा। जायन्ते नात्र सन्देहो गिरिजे नगनन्दिनि। शिवशब्दपरिज्ञानं विना यः पूजयेच्छिवम्। तस्य छुरिकया जिह्वाकर्त्तनं पापमोचनम्। विष्णुर्बिन्दुगता ज्योत्स्ना अणिमा सत्त्वरूपिणी। मङ्गला कामवशासिद्धिरीशित्वशिवरूपिणी। लघिमाप्राप्तिसिद्धिषु प्राकाम्या महिमा तथा। वशित्वंच तथा सिद्धिः पञ्चशून्ये विजृम्भते। ज्ञात्वा च परमेशानि वर्णद्वयस्य निर्णयम्। तदा फलमवाप्नोति पार्थिवस्य प्रपूजने। एतद्रहस्यं परमं सर्वपूजासु सम्मतम्। एतत् तत्त्वमविज्ञाय जपपूजां करोति च। यथा तस्य

वृथा पूजा गायत्रीरहितस्तथा॥

देव्युवाच—हंसं निरञ्जनं नित्यं निर्विकारमकृत्रिमम्। हंसस्थानं महादेव कथयस्व दयानिधे॥

श्रीदेव उवाच—अधोबिन्दुषु हंकारं संकारं ऊर्द्धबिन्दुषु। विभाव्य पूजयेदात्मा दशवर्णं महामनुम्। इति ते कथितमन्यद्भेदं परमगोपनम्। अनेन विधिना देवि बद्धलिङ्गं प्रपूजयेत्। युगभेदक्रमे भद्रे कलौ चतुर्गुणं भवेत्। त्रेतायां द्विगुणञ्चैव द्वापरे त्रिगुणन्तथा। संपूज्य विधिवल्लिङ्गं परब्रह्ममयो भवेत्। अतःपरं प्रवक्ष्यामि गायत्र्यक्षरचिन्तनम्। भूर्लोकश्च तु भूःकारो भुवर्लोको भुवस्तथा। स्वःकारः सुरलोकश्च गायत्र्या आसनं स्मृतम्। परस्य ब्रह्मणो रूपं तकारं त्रिगुणात्मकम्। त्सकारं रसतत्त्वञ्च विकारो गन्ध एव च। एवं तत्त्वं विजानीयात् गायत्र्यासु विनिर्णयम्।

देव्युवाच—योकारश्च तथाकाशो योकारो नासिका तथा। तुकारस्य तु मे देव सदर्थं कृपया वद॥

श्रीदेव उवाच—त्रयोदशस्वरः शक्तिर्विसर्गान्तः स्वरोपरि। त्रयोदशस्वराक्रान्तं वायुबीजं जपेत् ततः। वायुबीजं जपेद्‌ विद्वान् पापोच्चाटनकर्मणि। यो यो वर्णद्वयं भद्रे पापस्योच्चाटनं भवेत्। वकारस्य च सन्दर्भं पूर्वोक्तं वीरवन्दिते। पञ्चशीर्षा च गायत्री षट्कुक्षा पञ्च देवता। सांख्यायनसगोत्रा च षट्पदा परिकीर्तिता। अनेनैव हि गायत्र्या आसम्यक् कथ्यते यतः। अत आचमनः ख्यातः कथ्यते तन्त्रदर्शिभिः। गायत्र्याचमनं कृत्वा गायत्रीं प्रजपेत् सुधीः। सम्यक् प्रकारभावेन नवशक्तिमयं जलम्। करस्थं मन्त्रमुच्चार्य्य निरीक्ष्य शिवरूपिणम्। आचमनाद्‌ यान्ति पापानि प्राप्नोति पुण्यमक्षयम्। समन्त्रं सशिवं तोयम् आत्मतत्त्वमितीरितम्। गायत्रीपानमात्रेण शब्दब्रह्ममयो भवेत्। विना पानं हि गायत्र्या गायत्रीजपनिष्फलम्। पूरकैकेन पानं स्यात् द्वितीयं कुम्भकैस्तथा। तृतीयं रेचकैः पानं गायत्रीपाननिर्णयम्। आत्मविद्याशिवैस्तत्वैस्तदेवाचमनं भवेत्। जपेत् सूर्य्यमुखो भूत्वा नास्ति दिङ्नियमः क्वचित्। गायत्रीं प्रजपेन्नित्यं त्रिसन्ध्यं नात्र संशयः। अशौचे तु महेशानि गायत्रीं मनसा स्मरेत्। गायत्री बहुरूपा च त्रिसन्ध्यं ध्यानमेव च। तत्रादौ यदि देवेन्द्र शस्यते प्रणवद्वयम्। तन्मे कथय योगेन्द्र प्रणवस्थाननिर्णयम्।

देव उवाच—यात्‌कारान्तेषु भूरादौ प्रणवं क्षत्रवैश्ययोः। प्रणवैः पुटितं कृत्वा प्रतिवर्णं पृथक् पृथक्। अष्टोत्तरशतं जप्त्वा सर्वपापक्षयो भवेत्। प्रणवाद्या व्याहृतिः स्यादजपाभूर्भुवस्वरः। आद्यन्ते प्रणवं दत्त्वा गायत्रीं प्रजपेद्द्विजः। चतुर्वर्गप्रदा विद्या चतुर्विद्यात्मिका सदा। वामा

धर्मप्रदाबिन्दुर्ज्येष्ठा अर्थप्रदा तथा। रौद्रीकामप्रदाबिन्दुः श्रीबिन्दुर्मोक्षदायिनी। महेशवदनं बिन्दुः श्रीविष्णोर्हृदयन्तथा समनुः परमाराध्या संयुक्ता ब्रह्मबिन्दुना। मोक्षदाता च श्रीबिन्दुः चतुर्बिन्दुर्विनिर्णयम्। प्रातरादित्यसङ्काशां चतुर्बाहुसमन्विताम्। हंसासनसमासीनाम्। ऋग्वेदे समुदाहृताम्। मध्याह्ने चन्द्रसंकाशां गरुड़ासनसंस्थिताम्। चतुर्भुजां कृष्णवर्णां विकचोत्पलधारिणीम्। यजुर्वेदोदितां ध्यात्वा प्रजपेत् परमाक्षरीम्। वृषासनसमासीनां चतुर्बाहुसमन्विताम्। सायाह्ने वरदां घोरां प्रतिवक्त्रे त्रिलोचनाम्। पञ्चाशन्मातृकावर्णं पञ्चाशत्स्थानसन्धिषु। विन्यसेद् यत्नतो यस्मात् तस्मान्न्यासेति कथ्यते। शोधनं पञ्चभूतानामिन्द्रियाणाञ्च शोधनम्। क्रियते यत्नतो यस्माद् भूतशुद्धिः प्रगीयते। ईड़या पूरयेद्वायुं शक्तिभिः षोड़शैः स्वरैः। ककारादिशिवैर्वर्णैः कुम्भकं कुण्डलीमुखे। यस्मादुत्पद्यते वायुस्तत्रैव वायुधारणम्। रेचके च शिवार्द्धेन सन्त्यजेत् पिङ्गलापथे। विश्वासात् प्राणदेवस्य प्राणायामेति कथ्यते। शिवशक्तिमयो जीवस्तदैव सहसा भवेत्। वर्णभेदमविज्ञाय यदि सन्ध्यामुपास्महे। वृथा भवति सा सन्ध्या न सन्ध्या फलमाप्नुयात्। वर्णानां चिन्तनं ध्यानं सम्यक् पापप्रणाशनम्। त्रिसन्ध्यं कुरुते यस्मात् तस्मात् सन्ध्येति कथ्यते। मूलादिब्रह्मरन्ध्रान्तं गीयते मननाद् यतः। मननात्त्राति षट्चक्रं गायत्री तेन कीर्तिता। गायत्र्या रहितो विप्रो घोराधाणि व्यजायत। यस्य भूपस्य हत्यायां संग्रामं मृगयां विना। जायते अधमा बुद्धिर्नरव्याघ्रः स एव हि। अन्ते स परमेशानि व्याघ्रशूकरयोनिषु। जायते नात्र सन्देहो मम वाक्यं सुनिश्चितम्। भुक्त्वा च विविधान् मांसान् विष्ठाश्च विविधास्तथा। हत्याञ्च ब्राह्मणादीनां कृत्वा पापेषु मज्जति। निष्कृतिर्नास्ति तस्यापि तस्मात् पापात् कदाचन। नरव्याघ्रस्य देशे वै योजनाभ्यन्तरे स्थिताः। ब्राह्मणाः कृतचण्डाला गायत्रीरहिता यथा। अन्ते च ब्राह्मणास्ते वै व्याघ्रशूकरयोनिषु जायन्ते नात्र सन्देहः किं तेषां धर्मकर्मणि। नरव्याघ्रस्य यो विप्रः शान्तिस्वस्त्ययनञ्चरेत्। ते विप्राः कृतचण्डालाः प्राप्नुयुस्तेऽपि तद्गतिम्। किन्त्वस्य ब्रह्मजापेन सन्ध्यायां किं प्रयोजनम्। सर्वास्तेषां वृथा देवि कृतचाण्डालवत् क्रिया। पुराणुयायिनं गीतं श्रुत्वा शूद्रमुखाद्द्विजः। तत्क्षणाद् याति शूद्रत्वं शूद्रश्चाण्डालतां व्रजेत्। आगमं परमं तन्त्रं पञ्चाशन्मातृकाक्षरम्। पञ्चाशन्मातृकाव्याख्यां यो जानाति द्विजोत्तमः। आचार्य्यः स च विज्ञेयः सर्वतन्त्रेषु निर्णयः। एतत्तत्त्वमविज्ञाय आचार्य्यः स कथं भवेत्। एतत्तत्त्वमविज्ञाय यथा शूद्रत्वमर्हति। गायत्रीरहितो विप्रस्तथैव शूद्रतां व्रजेत्। सन्ध्याध्यानं प्रवक्ष्यामि सावधानेन संशृणु।

विना ध्यानं महेशानि न सन्ध्याफलमाप्नुयात् । नासाग्रे लोचनं न्यस्य ध्यायेद् ब्रह्मस्वरूपिणीम् । प्रातरादित्यसङ्काशां मध्याह्ने शङ्खसन्निभाम् । सायाह्ने मरकतभासां चतुर्बाहुसमन्विताम् । पट्टाम्बरपरीधानां शङ्खकङ्कणमण्डिताम् । मुक्ताहारलतोपेतां कुटिलालकभूषिताम् । कटाक्षविशिखोपेतां समुन्नतपयोधराम् । शरदिन्दु प्रसन्नास्यां विचित्रकबरीयुताम् । दिव्यगन्धप्रलिप्ताङ्गीं दिव्यमाल्यपरिष्कृताम् । दाड़िमीवीजसदृशदशनद्युतिसूज्ज्वलाम् । सिन्दूरतिलकोद्दीप्तामञ्जनाश्रितलोचनाम् । तनुदीर्घाङ्गुलीभासन्नखचन्द्रविराजिताम् । ब्रह्मविष्णुस्तुतां देवीं रुद्रादिपरिवन्दिताम् । षट्चक्रसंस्थितां दिव्यां परमानन्दरूपिणीम् । एवं ध्यात्वा प्रसन्नात्मा सन्ध्यां कुर्य्यात् फलाप्तये ॥

इत्यागमसन्दर्भे ज्ञानदर्शने देवदेवीसंवादे गायत्री
तन्त्रस्य प्रथमः परिच्छेदो ब्राह्मणपटलः ।

---

श्रीदेव उवाच । भूःकारश्च तु भूर्लोको भुवर्लोको भुवस्तथा ॥ स्वःकारः सुरलोकश्च गायत्र्याः स्थाननिर्णयम् । इच्छाशक्तिश्च भूःकारः क्रियाशक्तिर्भुवस्तथा ॥ स्वःकारो ज्ञानशक्तिश्च भूर्भुवःस्वःस्वरूपकः ॥ परत्रयात्मकं भद्रे वर्णत्रयमिदं सदा । मूलपद्मश्च भूर्लोको विशुद्धश्च भुवस्तथा ॥ सुरलोकः सहस्रारो गायत्रीस्थाननिर्णयम् ॥

श्रीदेव्युवाच । नित्यं जपति चात्मीयं जीवात्मा ब्राह्मणः प्रभो । कथमावाहनं तस्याः समर्पणमथापि वा । विसर्जनं कथं तस्याः कृपया कथय प्रभो । गायत्री या महादेव सैव स्याद् ब्राह्मणः स्वयम् । तस्या विसर्जने विप्रस्तत्क्षणात् शूद्रतां व्रजेत् । रूप्याद्यात्मकजीवात्मा गायत्रीतत्त्वमेव तत् । अतोऽत्र कथ्यते आत्मा मुनिभिस्तत्त्वदर्शिभिः । गायत्र्यास्तुल्यमाचारं नित्यं जीवस्य चात्मनः । कथ्यते तेन चात्मीयमात्मानस्तत्त्वदर्शिभिः । महेश्वरमुखोद्भूता विष्णोर्हृदयसम्भवा । आत्मन्यवस्थितिस्तस्याः कथं तस्या विसर्जनम् । गायत्र्या सह योगेन आत्मा जीवोऽपि ब्राह्मणः । तस्या विसर्जनं देव यदि न दीयते द्विजैः । अङ्गहीना तदा सन्ध्या न सन्ध्याफलमाप्नुयात् । आवाहनं यथा अङ्गध्यानञ्च स्मरणं यथा । तथा चाङ्गं महादेव समर्पणविसर्जनम् । पञ्चाङ्गं सर्वविद्यायाः सर्वशास्त्रे प्रतिष्ठिता । पञ्चाङ्गोपासिता विद्या गायत्री ब्रह्मपूजिता । पञ्चाङ्गोपासनेनैव गायत्रीं न जपेद् यदि । दिनकृत्यं भवेत्तस्य शूद्रवद् वृषभध्वज । आवाहनं यत्र यत्र तत्र तत्र विसर्जनम् । यदि न विसर्जनं तस्या ध्यानं तस्या भवेद् वृथा । जायते नात्र सन्देहो महेशसूत्रसम्मतम् । त्वमेवसंशयच्छेत्ता संशयं छिन्धि मे प्रभो ।

श्रीदेव उवाच । यस्मादागमनं तस्यास्तत्रैव गमनं प्रिये । यत्र ति-

ष्ठति गायत्री तत्रैव ह्यात्मनः स्थितिः। यथा विष्णुस्तथा चात्मा गायत्री-सहिता तथा। यथात्मा च तथा रुद्र ह्यात्मा ब्रह्मसमन्विता। ब्राह्मणानां त्रयो नित्यं प्रणवं भूर्भुवस्वरः। प्रजपेत् यदि विप्रात्मा गायत्र्या फलमाप्नुयात्। स्त्री चैव पुरुषस्याङ्गं स्त्रिया अङ्गं पुमान् सदा। अजपासहिता ह्यात्मा स्त्रीणाञ्चैव विशेषतः। अजपा ब्राह्मणी तत्र गायत्री ब्राह्मणः स्वयम्। यदि शक्तिश्च गायत्री तत्रापि ब्राह्मणः शिवः। वर्णव्याप्तिस्थितो ब्रह्मा शिवः परमकारणः। गायत्र्या धारणाशक्तिर्ब्रह्मणो भूर्भुवःस्वरः। पुरुषस्तत्रगायत्री शिवः परमकारणः। शेते निरञ्जनो देवः पञ्चाशन्मातृकापुरे। अन्तर्यामी जगत्स्वामी पुरुषस्तेन कथ्यते। प्रकृष्टवचनं प्रश्च सृष्टिश्च कृतिरुच्यते। प्रकृतिः कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः। प्रकृत्या सह योगेन ब्रह्माण्डं कोटिकोटिशः। शक्तो भवति सर्वत्र शक्तिस्तेनैव कथ्यते। संपूज्य पार्थिवं लिङ्गं नित्यं भक्तियुतो नरः। शक्तिश्च पूजयेत्तस्मिन्नावाह्यविधिपूर्वकम्। पूजनात् फलमाप्नोति चाधिकमधिकं यथा। एवं स्त्रीसंसर्गतो विप्रो गायत्र्याः फलमाप्नुयात्। इति भेदं महेशानि षट्चक्रे परिचिन्तयेत्। विशेषञ्चात्र वक्ष्यामि अतिगुह्यं शृणु प्रिये कृते त्रेतायुगे भद्रे द्वापरे प्रणवत्रयम्। अशुद्धाः शूद्रकर्माणो ब्राह्मणाः कलिसम्भवाः। प्रणवैः पुटितं कृत्वा प्रतिवर्णं पृथक् पृथक्। अष्टोत्तरशतं जप्त्वा एकधा वापि सुन्दरि। प्रणवत्रयसंयुक्तां गायत्रीं प्रजपेत्ततः। गायत्र्याः फलमाप्नोति अन्यथारण्यरोदनम्। युगे युगे तथा राजा वैश्यश्चैव युगे युगे। प्रणवद्वयसंयुक्तामष्टोत्तरशतं जपेत्। ब्राह्मणे क्षत्रिये वैश्ये विशेषमिति निश्चयम्। गायत्री च यथा देवि महाविद्या तथा प्रिये विद्यां वा चोपविद्यां वा प्रणवैः पुटितां कलौ। जप्त्वा सिद्धिमवाप्नोति तद्वते विफलं भवेत्। परंब्रह्ममयं क्षेत्रं रेतःशोणितसंयुतम्। निरीक्ष्य प्रविशेदात्मा राजते क्षेत्रमध्यतः। अतोऽत्र कथ्यते राजा क्षत्रियस्तेन कथ्यते। एवं निरीक्ष्य जीवात्मा क्षेत्रमध्ये विशेद् यतः। ज्ञानात्मरहितो यस्मात् वैश्यस्तेनैव कथ्यते। रेतःशोणितनिर्माणं शूद्राण्या गर्भ पञ्जरे। दुर्गत्या प्रविशेदात्मा गायत्रीरहितस्थले। ज्ञानात्मरहितो यस्मात् शूद्रस्तेनैव कथ्यते। ब्राह्मणक्षत्रवैश्यानां क्षेत्रं ब्रह्ममयं सदा। गायत्री परमं ब्रह्म सततंशूद्रवर्जितम्। कृते त्रेतायुगे भद्रे द्वापरे च तथैव च। ब्राह्मणक्षत्रवैश्यानां निकटे नापि तत्स्थितिः। स च शूद्रमयो विप्रः कलिकाले च भारते। ब्राह्मणाः शूद्रकर्माण अतएव कलौ युगे। नापितोऽपि द्विजं त्यक्त्वा नानाजातिमुपास्महे॥

इत्यागमसन्दर्भे ज्ञानदर्पणे ब्राह्मणोल्लासे गायत्रीतन्त्रस्य
द्वितीयब्राह्मणपटलः।

देव्युवाच । याज्ञवल्क्ये महादेव प्रणवद्वयमीरितम् । इति मे संशयं छिन्धि कृपया परमेश्वर ॥

देव उवाच । प्रणवादिर्व्याहृतिः स्यादजपा भूर्भुवस्वरः । तकारादावकारान्ते प्रणवं त्रिगुणं ततः ।

गायत्री प्रणवश्चान्ते तकारेणानुकृष्यते । आद्यन्ते प्रणवं व्यक्तं याज्ञवल्कयस्य सम्मतम् । प्रशस्तं क्षत्रवैश्येषु न च विप्रे कदाचन । प्रशस्तं ब्राह्मणे नित्यं प्रणवत्रयसंयुतम् । मध्ये च प्रणवं गुप्तं चकारानुमतं प्रिये । चकारेण च इत्यस्य कृष्यते प्रणवत्रयम् ॥

श्रीदेव्युवाच । प्रणवव्याहृतिभ्याञ्च गायत्र्या त्रितयेन च । प्रणवैकं स्मृतिमतं तत् कथं प्रणवद्वयम् । प्रणवादिर्व्याहृतिः स्यादजपा भूर्भुवः स्वरः । प्रणवोक्त्या द्वयोक्त्या च निर्णयं प्रणवत्रयम् । एका दण्डी ब्राह्मणोशक्तिर्द्वितीयं शिवमेव च प्रथमं प्रणवे सूत्रे वह्निशक्तिर्द्वितीयके । तृतीये भास्करशक्तिः सोमशक्तिश्चतुर्थके । पितृदेवः पञ्चमे सूत्रे षष्ठसूत्रे प्रजापतिः । वासुदेवः सप्तमे सूत्रे नीलकण्ठोऽष्टमे तथा । नवमे सर्वदेवस्तु नवसूत्रविनिर्णयम् । नित्यं नवगुणं सूत्रं प्रणवत्रयसंयुतम् । प्रणवद्वयसंयोगे कथं नवगुणं भवेत् ॥

श्रीदेव उवाच । प्रणवत्रयमित्युक्त्वा ग्रन्थि दत्त्वा द्विजोत्तमः । दद्यात् क्षत्रियवैश्येषु तदा नवगुणं भवेत् । वामकाये ब्राह्मणस्य सदा नवगुणस्थितिः ॥

श्रीदेव्युवाच । तत् कथं क्षत्रिये वैश्ये सूत्रं नवगुणं भवेत् । वामकायेऽथ विप्राणां क्षत्रवैश्ये तथैव हि । वामकाये सदा शक्तिर्विद्यते न च दक्षिणे । त्रिदण्डेन च संयुक्तं यज्ञसूत्रं यथा तथा । ब्राह्मणी एकदण्डी च द्वितीये ब्राह्मणः स्मृतः । ब्रह्मादिदेवतावृन्दैर्यज्ञसूत्रं यथा प्रिये । संपूज्य संस्थिता तत्र ह्यनिशं सुरपूजिते । यज्ञोपवीतं परमं नित्यं दर्भसमन्वितम् । कुण्डलिनो महाबिन्दु हंसोपरि सुशोभनम् । हंसं तुरीयं चार्वङ्गि निर्विकारं निरञ्जनम् । शिवरूपो हकारस्तु शक्तिः स परिकीर्तितः । हकारस्थोऽपि यो बिन्दुर्बिन्दुना जायते स च । बिन्दुना जायते बिन्दुर्गायत्री बिन्दुना भवेत् । गायत्र्या जायते सर्वं ब्रह्माण्डं कोटिकोटिशः । हंसं तुरीयं मनसि विभाव्य प्रजपेन्मनुम् । हंसे तुरीये चार्वङ्गि न च आवाहनादिका । गायत्र्यात्मकप्रणवे बिन्दौ कुर्यादावाहनादिकाम् । निकारान्ते वायुबीजे ह्यनुस्वारेषु भावना । परमाणुः सूक्ष्मतनुः सर्वव्यापी शिवो विभुः । प्रकृतिः कुण्डली स्वारः सर्वव्यापीति चाम्बिका । अनुसूक्ष्मा स्वारसूतः स्वारसूक्ष्मा गता सदा । अनुस्वारः कथ्यते ते मुनिभिस्तन्त्रदर्शिभिः । सर्वं बिन्दुगतं ह्येतत् ब्रह्माण्डं कोटिकोटिशः । व्यापकत्वादितत्त्वाच्च बिन्दुस्तेनैव कथ्यते । ज्येष्ठा रौद्री स्थितिकृती बिन्दुद्वयवि-

निर्मितम्। नित्यं हि विगतः स्वर्गःस्वर्गश्च सृष्टिवाचकः। अष्टकालात्मको नित्यतमःसत्त्वात्मको विभुः। या नित्या प्रकृतिर्बिन्दुरनन्याश्रयनिर्णयः। नास्ति बिन्दोः परं तत्र तत्त्वं तेन हि ईरितम्। अतएव हि सर्वत्र विसर्गेत्यभिधीयते। अन इत्यक्षरब्रह्म शब्दःप्रकृतिकुण्डली। न्यकारः प्रत्ययाकारा नित्या श्रीपरकुण्डली। अनन्यशक्तिमासाद्य ह्याविरासीत् शिवो विभुः। अनन्यकुण्डली शक्तिः परस्य ब्रह्मणो गतिः। कुण्डल्याः परमब्रह्म गतिर्वेदेषु निर्णयः। अन्तर्यामी जगत्स्वामी सर्वव्यापी शिवो विभुः। शरीरं परमं ब्रह्म शरीरं तस्य कुण्डली। अनन्यं हि विना ब्रह्म कुत्रापि नास्ति सुन्दरि। अनन्यपूजनाद्ध्यानादाविरासीत् सनातनः। अन्योऽन्यमाश्रयाद्वेदे ह्यनन्यमिति कथ्यते। पुनः पुनः पदोक्त्या च आगमे नास्ति दूषणम्। बिन्दुनावाहनं तस्याः शेषबिन्दौ विसर्जनम्। समर्पणं मध्यबिन्दौ बिन्दुमध्येषु भावना। ध्यानञ्च भावना बिन्दौ इति पञ्चाङ्गनिर्णयम्। निकारान्ते स्थिता घोरा अनुस्वारसमन्विता। भावना बिन्दुमध्येषु नास्ति किञ्चिद्विचारणा। महामरकतभासा वायुबीजमितीरिता। घोरचन्द्रप्रतीकाशा शमनाकारनिर्णयम्। निकारान्ते वायुबीजस्वरूपा पुष्प शोभिता प्रथमप्रणवे वामा ज्येष्ठा मध्ये च वैष्णवी। तथैव शेषप्रणवे रौद्री संहारकारिणी। गायत्री परमब्रह्म दशबिन्द्वात्मिका। वायुबीजेसमारूढ़ा श्रीबिन्दौ भावना सदा। अतएव हि गायत्री सृष्टिस्थितिलयं क्रमात्। रेतःशोणितसंयोगे यदा देहः प्रजायते। कश्चिदात्मा तदा तस्मिन् जीवभावः प्रपद्यते। शरीरं प्रकृतेस्तत्त्वं गायत्र्यक्षरनिर्मितम्। अत आहुर्ब्रह्मकलां प्रतिसेतुं यथा तथा। अत आत्मेति जीवेति शरीरीति च कथ्यते। त्वक्श्मश्रुरोमसंयुक्तं मज्जाशुक्रास्थिसंयुतम्। पुरीषमूत्रविड्युक्तं कफपित्तयुतन्तथा। इदं नश्वरदेहः स्यात् शरीराद्भिन्नमुच्यते। शरीराभ्यन्तरे मूले त्रिकोणं तेजसां निधिः। स ब्रह्मा स शिवः सूर्य्यः स चाग्निः स च चन्द्रमाः। स एव विष्णुः स गुरुरन्तरात्मा स उच्यते। सार्द्धत्रिवलयाकारा विसतन्तुसमाकृतिः। त्रिकोणाभ्यन्तरे शून्ये कोटिचन्द्रप्रदीपिते। कोटिविद्युल्लताकारा कुण्डली परदेवता। अतएव हि सर्वत्र परमात्मा प्रकीर्तितः। परमात्मा समं ज्ञानं निर्विकारं निरञ्जनम्। अगम्यं सर्वदेवानां सूक्ष्मं ज्योतिर्मयं विभुम्। अनेककोटिसानन्दपञ्चाशन्मातृकाक्षरम् निर्मलं परमं ब्रह्मशिवं परमकारणम्। सुवर्णं सर्वदं शान्तं ह्रस्वरे चन्द्रमा यथा। ज्ञानात्मा कथ्यते तेन मुनिभिस्तन्त्रकोविदैः। त्रिविधो जायते देहः स्त्रीपुंनपुंसकन्तथा। रजोऽधिका भवेन्नारी भवेद्रेतोऽधिकः पुमान्। तथा नपुंसकी देहः समानो रेतःशोणितैः। शुद्धसत्त्वात्मको जीवः सह इत्यक्षरात्मकः। हंसौ बिन्द्वात्मको नित्यं नान्यथा परिचिन्तय। रेतः

शोणितसंयोगं यदा गर्भं प्रजायते । किञ्चिदात्मा यदा तस्मिन् जीवभावः प्रपद्यते । तत्क्षणाच्चैव गायत्री जीवात्मना सह जायते । जीवव्यक्तिस्तत्र आत्मा कला श्रीरन्तरात्मनः । गायत्री परमा विद्या तत्र एकत्र तिष्ठति गायत्री ब्रह्मणस्तत्र कला श्रीः परमात्मनः । जीवात्मा तत्र संप्राप्य गायत्रीं तत्त्वरूपिणीम् । जीवात्मा चैव गायत्री एकत्र तत्र तिष्ठति । परस्य ब्रह्मणो देवि तत्रैव ह्यनिशं स्थितिः । ब्रह्मविद्यामयो जीवो ज्ञानात्मसहितः सदा । 'ब्राह्मणः कथ्यते तेन मुनिभिस्तन्त्रकोविदैः । एवं तत्त्वमयो भद्रे क्षत्रियो वैश्य एव च । न शूद्रे विद्यते तत्त्वं गायत्र्यक्षरसंयुतम् । रूपादितत्त्वसंयुक्तं गायत्र्यक्षरवर्जितम् । प्रजपेद्व यत्नतो विद्वान् गायत्रीं बिन्दुमण्डले । तदैव सहसा भद्रे ह्यात्मन्येव समर्पणम् । यथा मनस्तथैवात्मा गच्छेत मनसेच्छया । तथेच्छया पदे भद्रे प्रययौ बिन्दुमण्डलम् । आयाहि वरदे ध्याने ह्यागतो बिन्दुमण्डलात् । एकधा स्मरणे भद्रे बिन्दुमध्ये समर्पणम् । प्रातःकाले जपेन्मन्त्रं यत्नतः सूर्य्यमण्डले । मध्याह्ने प्रजपेद्देवीं यत्नतो वह्निमण्डले । सायाह्ने प्रजपेद्देवीं यत्नतश्चन्द्रमण्डले । नकारान्ते विसर्गो यो बिन्दुयद्वविनिर्मितः । ईश्वरस्तु अधोबिन्दुरूर्द्धबिन्दुः सदाशिवः । प्रातःकाले ह्यधोबिन्दौ मध्याह्ने ऊर्द्धबिन्दुषु । सायाह्ने चैव श्रीबिन्दौ भावना परमे शिवे । रसबिन्द्वात्मको मन्त्र इति वा तन्त्रकल्पना । वायुबीजे समारूढ़ः श्रीबिन्दुं वरवर्णिनि । संयुक्तचन्द्रसूर्य्याग्निमण्डलेन ह्यहर्निशम् । अतएव वरारोहे श्रीबिन्दौ ब्रह्मभावना ॥

श्रीदेव्युवाच । एवमात्मपरिच्छिन्नो निर्विकारः शिवोपमः । तत् कथं त्वमहं ज्ञानं जीवात्मनः प्रजायते । आत्मशक्तिधरस्त्वं हि संशयं छिन्धि मे प्रभो ॥

श्रीदेव उवाच । वामपार्श्वे स्थितं पापपुरुषं कज्जलप्रभम् । ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनादिकम्' कामक्रोधादिभिर्युक्तमज्ञानतिमिरावृतम् । अजीवं तच्च विज्ञेयमात्मना भिन्नमुच्यते । अजीवाज्जायते पापं पुण्यं जीवात् प्रजायते । पापं वा यदि वा पुण्यं उभयोः कारणं मनः । द्विविधा प्रकृतिर्ज्ञेया उत्तमा ह्यधमा तथा । अधमा विकृतिर्ज्ञेया ह्युत्तमा प्रकृतिः स्मृता । कारणं अश्वमेधादेः प्रकृतिः परमेश्वरी । विकृतिः प्रकृतेरन्या क्रियते पापसञ्चयम् । मनसा विस्मृतो भूत्वा त्यक्त्वात्मानं यदा तदा । अजीवः क्रियते पापं मनसा सह सुन्दरि । अतएव हि सर्वत्र कथ्यते चात्मविस्मृतिः । अनात्मस्मरणे पापं पुण्यं हि आत्मना तथा । अतःपरं प्रवक्ष्यामि उद्धारं ब्रह्मविग्रहम् । प्रणवं प्रथममुक्त्वा भूःकारं तदनन्तरम् । भुवःकारं ततो देवि स्वःकारं तदनन्तरम् । अजपेयं महाविद्या ब्राह्मणी ब्राह्मणीं प्रति । रेतःशोणितसंयोगे ब्राह्मणस्य स्थितिर्यथा । एवं सर्वत्र

चार्वङ्गि ब्राह्मण्याः स्थितिरुच्यते । उद्वाहे ब्राह्मणस्त्रीणामजपास्मरणं गुरोः । ओं भूर्भुवःस्वःपरित्यागे शक्तिहीनो भवेद्द्विजः । एवं हि ब्राह्मणस्त्रीणां क्षत्त्रादीनां तथैव च । पुंस्त्रीनपुंसके भद्रे ह्यात्मा जीवस्य संस्थितिः । वकारान्ते विसर्गो यः रौद्रीज्येष्ठासमन्वितः । स्वकारान्ते तथा भद्रे रौद्री ज्येष्ठा तथैव हि । प्रथमे प्रहरे रात्रौ द्वितीये च तृतीयके । चतुर्थे प्रहरे चैव दशधा दशधा जपेत् । बिन्दुमध्ये जपेन्मन्त्रं चतुर्बिन्दुं यथाक्रमम् । प्रथमप्रहरे रात्रौ दशधा दशधाथवा । पठित्वा कवचान् जप्त्वा प्राप्यते रजनीफलम् । अन्यथा विफलं सन्ध्या या कृता दिवसे द्विजैः । दशबिन्द्वात्मिका विद्या गायत्री तन्त्रसम्मता । यः पुमान् पिङ्गलः खर्वं ईषत्ताम्रमुखच्छविः । रक्तकेशः श्यावदन्तो दन्तमध्ये विराजते । स क्रूरः कथ्यते वेदे महापातकसंयुतः । दिनकृत्यं वृथा तस्य मूर्तिमान् पातकः स च । यथा तस्य वृथा पूजा गायत्रीरहितस्तथा । निगद्य ब्राह्मणीं भद्रे ब्राह्मणं कथयामि ते । ओंकारं पूर्वमुद्धृत्य ब्रह्मविष्णुशिवात्मकम् । तकारं रूपतत्त्वञ्च रूपसिद्धिप्रदायकम्। त्सकारं रसतत्त्वञ्च रसात् सिद्धिप्रदायकम् । विकारं गन्धतत्त्वञ्च गन्धसिद्धिप्रदायकम् । तुकारं स्पर्शतत्त्वञ्च स्पर्शसिद्धिप्रदायकम् । वकारं शब्दतत्त्वञ्च शब्दसिद्धिप्रदायकम् । तत्त्वमेतन्महागुह्यं गायत्र्याः शीर्षमुच्यते । रेकारं त्वचतत्त्वञ्च त्वचः सिद्धिप्रदायकम् । ण्यकारं घ्राणतत्त्वञ्च घ्राणसिद्धिप्रदायकम् । वायुबीजं ततो भद्रे बिन्दुना सहितं प्रिये । जिह्वातत्त्वमिदं प्रोक्तं रसनासिद्धिदायकम् । वायुबीजद्वयं भद्रे गायत्रीषु प्रतिष्ठितम् । निकारान्ते स्थितं बीजं विसर्गान्तः स्वरोपमम् । भकारमक्षितत्त्वञ्च अक्षिसिद्धिप्रदायकम् । र्गोकारं श्रोत्रतत्त्वञ्च श्रोत्रसिद्धिप्रदायकम् । तत्त्वमेतन्महागुह्यं गायत्र्याः कुक्षिरुच्यते । देकारं वाक्यतत्त्वञ्च वाक्यसिद्धिप्रदायकम् । वकारं पाणितत्त्वञ्च हस्तसिद्धिप्रदायकम् । स्यकारं पादतत्त्वञ्च पादसिद्धिप्रदायकम् । तत्त्वमेतन्महागुह्यं गायत्र्या गोत्रमुच्यते । वर्णत्रयं चतुर्वेदशाखापल्लवसंयुतम् । धीकारं लिङ्गतत्त्वञ्च लिङ्गसिद्धिप्रदायकम् । मकारं पृथिवीतत्त्वं पृथ्वीसिद्धिप्रदायकम् । हिकारं जलतत्त्वञ्च जलसिद्धिप्रदायकम् । धिकारं वह्नितत्त्वञ्च वह्निसिद्धिप्रदायकम् । योकारं शून्यतत्त्वञ्च शून्यसिद्धिप्रदायकम् । तत्त्वमेतन्महागुह्यं गायत्र्या देवता स्मृता । योकारं वायुतत्त्वञ्च वायुसिद्धिप्रदायकम् । नकारं पृथिवीतत्त्वं सर्वसिद्धिप्रदायकम् । आत्मा ब्रह्मकलाजीवो गायत्री ब्रह्म निश्चयम् । नान्ते बिन्दुद्वयं भद्रे श्यामलं अरुणं सदा । प्रकारं मनसस्तत्त्वं मनःसिद्धिप्रदायकम् । चोकारं बुद्धितत्त्वञ्च बुद्धिसिद्धिप्रदायकम् । अहं तत्त्वं दकारञ्च अहंसिद्धिप्रदायकम् । अहं तत्त्वं दकारञ्च अहंसिद्धिप्रदायकम् । यात्कारं चित्ततत्त्वञ्च

चित्तसिद्धिप्रदायकम् । तत्त्वमेतन्महागुह्यं गायत्र्याः पादमुच्यते । प्रथमे परमेशानि तकारं खण्डमेव यत् । सकारान्तर्गतो भूत्वा क्रियते पापमोचनम् । अकारान्तर्गतं खण्डं शेषस्य वरवर्णिनि । खण्डशेषे तकारश्च ब्रह्महत्याप्रमोचनम् । रेतःशोणितनिर्माणं शरीरं सर्वदेहिनाम् । शरीरं ब्राह्मणं भद्रे गायत्र्यक्षरसंयुतम् । तत्र ह्यात्मा ब्रह्मकला शरीरे लयमाप्नुयात् । ब्राह्मणक्षत्रवैश्यानां चतुर्विंशाक्षरैर्युतम् । शरीरं न तु शूद्रादेर्निश्चयं कथितं प्रिये । रेकारं प्रथमे देवि तकारं तदनन्तरम् । शोकारश्च णिकारश्च तकारश्च तथैव च । गायत्र्याः परमेशानि इति अक्षरनिर्णयम् । शूद्रादौ परमेशानि इति अक्षरचिन्तनम् । न जपे अधिकारोऽस्ति शूद्रादीनां कदाचन । अतो जगच्छक्तिमयं शैवेन वैष्णवेन किम् । एकधा श्रवणे स्त्रीणां जपो भवति सर्वदा । अजपा कथ्यते तेन मुनिभिस्तन्त्रकोविदैः । प्रत्यहं प्रजपेद् या स्त्री सा साक्षाद् ब्राह्मणीश्वरी । सा विष्णुः सा शिवो ज्ञेया जनशक्तिरितीरिता । सशक्तिज्ञानयुगलं अहस्तेन प्रकीर्तितम् । न जप्त्वा अजपाविद्यां ब्राह्मणी शूद्रिणी यथा । शूद्रिण्या सह योगेन ब्राह्मणः शूद्रतां व्रजेत् यथा इधमस्य संयोगात् उत्तमाब्रह्मणाधमाः । त्रिविधा ब्राह्मणाः प्रोक्ता उत्तमाधममध्यमाः । गायत्रीषु च सन्ध्यायां तथा वर्णनिरीक्षणे । वर्णानां गुणविज्ञानैः सदर्थे च सुलोचने । अनिशं जायते तस्य मनोबुद्धिर्वरानने । ब्राह्मणक्षत्रवैश्यानां सच्छूद्राणां गृहे तथा । भिक्षां कृत्वा तु यो विप्र उदरं परिपूरयेत् । उत्तमः स च विज्ञेयो मध्यमं निगदामि ते । गायत्रीषु च सन्ध्यायां सदा यस्य मनो भवेत् । कृषिकर्मरतो भूत्वा करोति शूद्रयाजनम् । मध्यमः स च विज्ञेयः अधमं निगदामि ते । लाक्षालोहविक्रयणाद् यथा स्याद् ब्राह्मणोऽधमः । किं तस्य ब्रह्मविद्यायां नाधिकारः कदाचन । वरं यवनसंसर्गं कुर्य्यान्मध्यमब्राह्मणः । वरं हडिडपसंसर्गं संत्यजेद् ब्राह्मणाधमम् । सदर्थं सर्ववर्णानां अज्ञात्वा ब्राह्मणाधमाः । इति ते ब्राह्मणस्त्रीणां संस्कारं तन्त्रसम्मतम् । कथितमतिगोप्यं तन्निश्चयं वर्णदर्शने । व्याहृतिर्या महेशानि सावित्री सैव ब्राह्मणी । न जपेद् षणं तन्त्रे ब्रम्हणोना कदापि च । क्षत्राणी वैश्यदारा च शक्तिरूपा नियन्त्रिता । शक्तिना पूजयेत् शक्तिं किमत्र दूषणं प्रिये ।

शृणु ध्यानं प्रवक्ष्यामि व्याहृत्या वरवर्णिनि । चतु- र्भुजां त्रिनयनां प्रतप्तकनकप्रभम् । शुक्लपद्मसमासीनां शुक्लवस्त्रपरिच्छदाम् । दाड़िमीवीजसदृशदशनद्युतिसु- ज्ज्वलाम् । सिन्दुरतिलकोद्दामाञ्जना त्रिलोचनाम् । ध्यानमेतद्वरारोहे स्त्रीणां प्रति यथोचितम् । पुरातनी पूर्णविद्या पञ्चदूर्णकुण्डली । परस्य ब्रह्मभजनीकातणं परकुण्डली । अन्यथा शववत्

सर्वं ब्रह्माण्डं कोटिकोटिशः । कुण्डलीशक्तिरहितः शिवोऽपि शववत् सदा। कुण्डली प्रकृतिर्या सा पञ्चाशद्वर्णविग्रहा। अनुस्वारस्वरूपा सा बिन्दुरूपा चिदाकृतिः। जीवस्य वामकायेषु विप्रस्य चानिशं यतः। अतोऽत्र कथ्यते वेदे वामकार्यः सदा द्विजः। वामकाये स्थिता नित्या गायत्री ब्राह्मणस्य च। दक्षकाये स्थिता नित्या विद्या जीवात्मिका सदा वामकायः कथ्यते वै ब्राह्मणस्तेन कथ्यते। परब्रह्मणि जीवोऽयं प्राप्यैव च विजृम्भते। ब्राह्मणः कथ्यते तेन मुनिभिस्तन्त्रसम्मतैः। देवासुरैः सदा पूज्यो वामकायो हि ब्राह्मणः। भिक्षावृत्तिर्भवेद् यस्य नान्यचेष्टा कदाचन। ब्राह्मणेभ्यो नमो नित्यं येषां भैक्ष्येण जीविका। अष्टोत्तरसहस्राणि यन्त्राणि विविधानि च। प्रत्येकमक्षरे भद्रे गायत्रीष्वपि विद्यते। एकाक्षरेऽपि विप्रस्य गायत्र्या अपि पार्वति। नमो भवति नीलश्च स मुक्तः सर्वदा द्विजः। संपूज्य सर्वदेवानां मम पूज्यो न संशयः। सङ्केतमागमं शास्त्रं परब्रह्मनिरूपणम्। पञ्चाशन्मातृकावर्णमागमं प्रकृतिः स्वयम्। या नित्या ब्रह्म गायत्री सैव गङ्गा न संशयः। सर्वतीर्थमयी गङ्गा तेन गङ्गा प्रकीर्तिता। सर्वशास्त्रमयी गीता गायत्री सैव निश्चिता। यागतीर्थश्च गोलोकं गायत्रीरूपमद्भुतम्। बहुना किमिहोक्तेन ब्रह्माण्डं कोटिकोटिशः। ब्रह्मविद्यामयं सर्वं नान्यथा वचनं मम। गायत्रीरहितो विप्रः स एव पूर्वकुक्कुरः। शतजन्मन्यसृक् भुक्त्वा प्रतिजन्मनि ब्राह्मणः। शतान्ते ब्राह्मणो भूत्वा पूतिगन्धमयं मुखम्। कुक्कुरत्वं परित्यज्य द्विजत्वं जायते ततः। गायत्रीष्वपि चार्वङ्गि अधिकारो भवेत्ततः। प्रकृष्टवाचकः प्रश्च कुण्डली बिन्दु रूपिणी। सृष्टिस्तत्र कृतिर्नाम विद्या सङ्केतकुण्डली। सृष्टौ प्रकृष्टा सा विद्या प्रकृतिस्तेन कीर्तिता। ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। ततः परशिवज्योतिः कुण्डली सङ्गता सदा। सङ्केतं कथ्यते तेन मुनिभिस्तन्त्र कोविदैः। ककारः कुण्डली साक्षात् पञ्चाशन्मातृकात्मिका। सङ्केतविद्या गायत्री परब्रह्मनिरूपणे। कुण्डली ब्रह्मसङ्केतः सङ्केतात् प्राप्यते परम्। पञ्चाशन्मातृका शक्तिर्ज्ञानमालेति कीर्तिता। गायत्री विस्मृतिर्यस्य संपूर्णमेकमक्षरम्। सहजानन्दमन्दिरे प्रभवेदात्मनः स्थितिः। शुद्धसत्त्वात्मकः सैव कला श्री अन्तरात्मनः। एवमात्मा परिच्छिन्नः प्रजपेदनिशं मनुम्। वित्तस्य लालसां कृत्वा कर्णपूरे न्यसेन्मनुम्। स यथा नरकं याति शिष्येण सह रौरवम्। गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत्। यदन्नं ब्राह्मणोद्देशे पच्यते च द्विजातिभिः। शूद्राणां यदि तत्रान्ने जायते वरवर्णिनि। शूद्रोच्छिष्टं भवेदन्नं विष्णवे न निवेदयेत्। तदन्नं विष्णवे दत्त्वा शूद्रेण सह रौरवम्। यथा स नरकं याति गायत्रीरहितस्तथा विष्णोर्निवेदितमन्नमज्ञानात्

शूद्रजातिषु। दत्त्वा नरकमाप्नोति गायत्रीरहितस्तथा। सर्वं तस्य वृथा देवि कृष्णपूजादिकाः क्रियाः। गायत्र्यात्मकजीवात्मा पूजको नान्य एव हि। पूजकस्य तथा पूज्याः शक्तिविष्णुशिवादयः। गायत्रीरहितो विप्रो न स्पृशेत् तुलसीदलम्। हरेर्नाम न गृह्णीयाद् गायत्रीरहितो द्विजः। महाचाण्डालसदृशः किं तस्य विष्णुपूजने। मन्त्रत्यागी गुरुत्यागी देवत्यागी तथैव च। दुरदृष्टवशाद्दैवाद् यस्य वंशे प्रजायते। स गोत्रबान्धवस्तस्य प्रायश्चित्तं समाचरेत्। कुशपत्रशतैः सार्द्धैर्निर्माय कुशपुत्तलीम्। वेदोक्तविधिना तस्य ह्यग्निदाहं समाचरेत्। अन्यथा तस्य यत् पापं न गोत्रेषु विशेद् द्रुतम्। तत्संसर्गिणो ये लोकास्तेऽपि तद्दोषभागिनः। स पापी वर्द्धते नित्यं कलिकाल विशेषतः। स गोत्रस्तस्य संसर्गी महादरिद्रतां व्रजेत्। परे च नरकं गत्वा कुरुते पापसञ्चयम्। पञ्चपातकसंयुक्तः स यथा ब्राह्मणाद्धतः। गायत्रीरहितस्यापि इममेव सुनिश्चिता। अशौचान्तदिने विप्रो गत्वा शूद्रगृहं यदि। भुक्त्वा गृहीत्वा तद् द्रव्यं तत्क्षणाद् याति शूद्रताम्। प्रेतोद्देशे च यद् द्रव्यं तत्र यस्य स्पृहा भवेत्। तद्दिने स भवेच्छूद्रो गायत्रीरहितो यथा। तद्दिने तद्गृहं गत्वा यदि गङ्गोदकं पिबेत्। तथापि स भवेत् शूद्रो गायत्रीरहितो यथा। यथा दर्दुरिकः कुष्ठी सर्वशास्त्रबहिर्मुखः। गायत्रीरहितो विप्रस्तथा धर्मबहिर्मुखः। वरं पूजा प्रकर्तव्या ब्राह्मणे व्यक्तनास्तिके। नित्यं दर्दुरिको विप्रः सर्वपूजाबहिर्मुखः। गायत्रीमयुतं जप्त्वा तद्धनं वेदपारगे। दत्त्वा शुद्धिमवाप्नोति ह्यन्यथा शूद्रवत् सदा। तत्त्वमेतन्महागुह्यं पूर्वाद्याम्नायसंयुतम्। ऊर्द्ध्वाम्नाययुतं तन्त्रं दक्षिणाम्नायसंयुतम्। श्रुत्वा शूद्रमुखाद्व्याख्यां शूद्रस्थाने पठेद् द्विजः। तत्क्षणात् स भवेत् शूद्रो गायत्रीरहितो यथा। स शूद्रः कृतचाण्डाल इह जन्मनि निश्चयः। कुलविंशतिमादाय अन्ते स नरकं व्रजेत्। यस्तु अध्यापकः शूद्रः स कथं धर्मतत्परः। तस्य सर्वं भवेद्व्यर्थं हरिनामादिकञ्च यत्। स सर्वयातनाभोगी यावदाहूतसंप्लवम्। पञ्चपातकसंयुक्तः कृतघ्नश्चैव निश्चितः। यस्तीर्थे मूत्रविट् कृत्वा यदि दैवाच्च एकदा। तत्क्षणात् तत्फलं त्यक्त्वा स यथा पितृभिः सह। स यथा रौरवं याति गायत्रीरहितस्तथा। ये तीर्थवासिनो लोकास्तीर्थे मूत्रं प्रकुर्वते। स्नानपूजाफलं त्यक्त्वा स यथा नरकं व्रजेत्। गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत्। पतङ्गादेर्यथारामस्तथैव तीर्थवासिनः।

इत्यागमसन्दर्भे ज्ञानदर्शने देवदेवीसंवादे गायत्रीतन्त्रे तृतीयो ब्राह्मणपटलः।

---

श्रीदेव उवाच। ह्रीं आगच्छ वरदे नित्ये परागधूलिधूसरे। मकरन्दरसामोदे परंब्रह्मसुखास्पदे। चन्द्रमण्डलमध्यस्थशिवपर्यङ्कशायिनि।

ब्रह्मविष्णुशिवान्तःस्थे सुषुम्नामध्यवर्तिनि। पञ्चाशद्युवतीसङ्गे महाबिन्दुस्वरूपिणि। आगच्छ त्वरितं मातस्त्वं बिन्दुचन्द्रमण्डलात्। आगत्य हृदयस्थानं विद्यासिद्धिं प्रयच्छ मे। ह्रीं ध्यात्वा विद्यां महेशानि ध्यायेद् यत्नेन देवताम्। प्रथमस्य च बीजस्य मन्त्राणां ध्यानमेव च। ततस्तु पूजयेद् विद्यां यावद्वर्णानि तानि च। आद्यन्ते प्रणवं दत्त्वा प्रतिवर्णं पृथक् पृथक्। चतुर्थ्यन्तं नमोऽन्ते च जपादौ पूजयेत् सुधीः। ततस्तु पूजयेद् विद्वान् जप्त्वा विसर्जनं ततः। ह्रीं गच्छ देवि महामाये महाबिन्दुस्वरूपिणि गच्छ देवि फलं दत्त्वा त्वं विष्णुश्चन्द्रमण्डलात्। जीवात्मनि सदा तिष्ठ तिष्ठ त्वं सुस्थिरा भव। ह्रीं ततः समर्पयेन्मन्त्रं पूर्वोक्तपटले यथा। पूजितानि सदा विद्ये जीवात्मा पूजितेऽक्षरे। परंब्रह्मपूजितासि जीवात्मनि स्थिरा भव। ह्रीं शाक्ते शैवे वैष्णवे च सौरे गाणपतेषु च। सर्वमन्त्रेषु विद्यासु शस्यते नान्यथा भवेत्। एतद्रहस्यं परममज्ञात्वा विफलं जपम्। चन्द्राग्रे वसते जीवः सुस्थिरो मनसा सह। सदाशिवपुराद्विद्या आगता ऐश्वरं पुरम्। तस्यैवावाहनं भद्रे कथ्यते तन्त्रकोविदैः। ईश्वराद् याति सा विद्या पुनः शिवपुरं प्रति। तदा विसर्जनं भद्रे कथ्यते मुनिपुङ्गवैः। मन्त्राक्षराणि यावन्ति आत्मन्येवार्पणं भवेत्। समर्पणं कथ्यते तैर्मुनिभिस्तन्त्रकोविदैः। सम्यक्प्रकारभावेन अर्पणं यत् समर्पणम्। तदैवात्मनि निर्णीतमिति वेदेषु निर्णयम्। आधाराचन्द्रपर्यन्तं सुषुम्नावर्त्मनानिशम्। आयाति याति सा विद्या इति वेदेषु निश्चिता। मन्त्राणां चिन्तनाद्देवि स मनुर्देवता स्वयम्। ध्यानेन दर्शनं दत्त्वा पुनर्मन्त्रेषु लीयते। एवं पुनः पुनर्मन्त्रं देवता च पुनः पुनः। आविर्भावतिरोभावो जायते स मनुः स्वयम्। ध्यानस्यान्तर्गतं मन्त्रं ध्यानकाले विशेषतः। मनश्चान्तर्गतं मन्त्रं जपकाले तथैव च। मनसा चिन्तनं ध्यानं तेन ध्यानं प्रकीर्तितम्। चिन्तनं देवतारूपं त्रिगुणं प्रति अक्षरम्। ब्राह्मणक्षत्रवैश्याश्च शूद्राद्यावरजातयः। स्त्रियश्च सकलास्तेषां शान्तरूपाः सदा शुचि। एषां मध्ये च या काचिदागत्य गुरुसन्निधिम्। प्रणम्य प्रार्थयेज्ज्ञानं धर्मार्थकाममोक्षदम्। यदि न दीयते तस्य ज्ञानं ज्ञानविशारदैः। ते यथा नरकं यान्ति गायत्रीरहितास्तथा। ब्रह्मज्ञानमयं ह्येतन्नास्ति जातिविचारणा। ज्ञानिने दीयते ज्ञानं ज्ञानिने कमलेक्षणे। पञ्चाशन्मातृकावर्णज्ञानं ज्ञानविदो विदुः॥

श्रीदेव्युवाच। कन्या च कर्तयेत् सूत्रं पतिपुत्रवती तथा। विधवा सधवा वापि पुत्रहीनापि ब्राह्मणी। क्षत्राणी वैश्यदारा च कर्तयेन्न च शूद्रिणी। दीक्षिता यदि सा भद्रे शूद्रिणी न च निन्दिता। सच्छूद्रा यदि सा भद्रे शुद्धा सा सूत्रकर्तने। असच्छूद्रा महेशानि निन्दिता

सूत्रकर्तने । कार्पाससम्भवैः सूत्रैर्यज्ञसूत्रं विनिर्मितम् । सूक्ष्मातिसूक्ष्मं परमं जम्बुद्वीपे विशेषतः । ग्रन्थिकाले स्मरेद्विप्रान् सूत्रो भवति मूर्तिमान् । ब्रह्मा च कश्यपो विप्रः सनकोऽथ सनन्दकः । सनत् सनातनो विप्रो नारदः कपिलस्तथा । मरीचिरत्रिः पुलहः पुलस्त्यो गौतमः क्रतुः भृगुर्दक्षः प्रचेताश्च वशिष्ठो वाल्मीकिस्तथा । द्वैपायनो भरद्वाजः शुको जैमिनिरेव च । विदूरश्च शुनःशेफो जातुकर्णश्च रौरवः । और्वः संवर्तकः शुक्रश्चयवनोऽथ बृहस्पतिः । चन्द्रः सूर्य्यो बुधः श्रीमान् यज्ञसूत्रस्य ग्रन्थिषु । तिष्ठन्तु मम वामांशे वामस्कन्धे ह्यहर्निशम् । गायत्री अजपारूपा रूपादितत्त्वरूपिणी । तिष्ठतु मम वामांशे वामस्कन्धे ह्यहर्निशम् । अत्र देवस्य सूत्रस्य देवाचार्य्यो बृहस्पतिः । ब्रह्माद्या देवताः सर्वे यज्ञसूत्रस्य देवताः । संमार्ज्य दधिदुग्धेन घृतेन बहुयत्नतः । घृताद्यभावे चार्वङ्गि मार्जयेत्तण्डुलपिण्डजैः । तदभावे सार्षपेण तिलतैलं परित्यजेत् । बिल्वस्य फलनिर्यासैर्मार्जयेत् सततं द्विजः । वामस्कन्धात् समुत्तोर्य्य वामाङ्गुष्ठे नियोजयेत् । वामाङ्गुष्ठं वामस्कन्धं एक एव न चान्यथा । वामाङ्गुष्ठयुतं सूत्रं कृत्वा संमार्जयेद्द्विजः । कण्ठे शिरे दक्षकरे कृत्वा शूद्रत्वमर्हति । गायत्रीमयुतं जप्त्वा तस्मात् पापात् प्रमुच्यते । शुद्धसत्त्वात्मकं सूत्रं तदा भवति प्रत्यहम् । शुद्धसत्त्वात्मकं सूत्रं ब्राह्मणेषु प्रशस्यते । लोहितं क्षत्रिये शस्तं वैश्ये पीतं प्रशस्यते । वर्णविप्रे यथा भट्टे मार्जन रहितं सदा । धारणं यज्ञसूत्रस्य जातिभेदे पृथक् पृथक् । रक्तचन्दनतोयेन मार्जयेत् क्षत्रजातयः । हरिद्रया मार्ज्जयेत् वैश्य इति सूत्रविनिर्णयः । वर्णविप्रेतथा भट्टे विशेषं निगदामि ते । प्रथमाष्टाक्षरं भद्रे व्याहृत्याः प्रथमाक्षरम् । त्रिसन्ध्यं प्रजपेद्भट्टो वर्णविप्रस्तथैव हि । आद्यन्ते प्रणवं त्यक्त्वा प्रजपेत् सततं यदि । स्वजात्युक्तफलं प्राप्य गायत्र्या फलमाप्नुयात् ॥

देव्युवाच । प्रजपेदनिशं ह्यात्मा तुरीयां ब्रह्मसंपदं । प्रजपेदनिशं ह्यात्मा चात्मीयं ब्राह्मणः प्रभो । गायत्री या महादेव तुरीया सैव नान्यथा । तुरीया सैव गायत्री नित्यमेकत्र संस्थितिः । उभयोरैक्ययोगेन प्रजपेदथवा पृथक् । इति मे संशयं देव भञ्जनं कुरु यत्नतः ॥

श्रीदेव उवाच । विन्दुमध्यगता नित्या गायत्री पर देवता । चतुर्विन्द्वात्मकं हंसं गायत्रीषु प्रतिष्ठितम् । नकारान्ते स्थितं शून्यं ज्योत्स्नाशक्तिसमन्वितम् । सकारान्ते स्थिता शक्तिः पिनाकिसहिता सदा । वकारान्ते द्वयं बिन्दु स्वकारान्ते द्वयं तथा । शिवशक्त्यात्मकं हंसं गायत्री स्त्रीपुरुषात्मिका । व्याहृतिः शोभिता तस्य बिन्दुना वरवर्णिनि । जपकाले महेशानि जायते श्वासबन्धनम् । यत्र तत्र विनिर्द्दिष्टं

विद्यामन्त्रं प्रसन्नधीः। सर्वं हंसमयं भद्रे नास्ति हंसात् परं मनुः॥

जीवन्यासं प्रवक्ष्यामि यज्ञसूत्रस्य संशृणु। यज्ञसूत्रं करे धृत्वा दक्षिणे द्विजसत्तमः। गायत्रीं प्रथमे उक्ता प्रणवं प्रजपेत् शतम्। आं ह्रीं ई उच्चार्य्य प्रणवादीनुच्चरेत्ततः। यज्ञसूत्रस्य वाङ्मनोनयनं तदनन्तरम्। गायत्रीं पुनरुक्त्वा च वामस्कन्धे निधापयेत्। जीवन्यासं विना देवि यज्ञसूत्रञ्च सूत्रवत्। शिवपूजनमत्याज्यं जातके मृतके तथा। ब्रह्मविद्या च अत्याज्या गायत्री मृतसूतके। कारागाराञ्विते ग्रामे यः पूजयति शङ्करम्। शङ्करं त्रिदशाराध्यमम्बिकां सुरपूजिता। यथा तस्य वृथा पूजा यज्ञसूत्रं तथैव च। पञ्चाधिका यत्र लोका बद्धास्तिष्ठन्ति वै गृहे। कारागारः स विज्ञेयस्तत्र पूजां परित्यजेत्। यदि नो दीयते पिण्डं पित्रादीनां मृताहनि। निषेधं कुरुते यस्तु स बौद्धो वरमूढ़धीः। मूत्रविट्शोणितैर्युक्ता तस्य जिह्वा यथा तथा। गायत्रीरहितस्यापि तस्य जिह्वा च निन्दिता। न विष्णुस्मरणं तस्य जिह्वयापि कदाचन। तस्य जिह्वा छुरिकया कर्त्तनं पापमोचनम्॥

देव्युवाच। देवदेव महादेव परमेश तपोधन। गायत्रीं परमाराध्यमशौचेन जपेद् यदि। तदाशुचिर्द्विजश्रेष्ठः सहसा याति शूद्रताम्।

श्रीदेव उवाच। अत्याज्या तान्त्रिकी सन्ध्या जनने मरणे तथा। त्याज्या च वैदिकी सन्ध्या जनने मरणे सदा। प्रशस्तं तान्त्रिकं स्नानं गायत्रीतन्त्रसम्मतम्। तान्त्रिकाचमनं कृत्वा ततः सन्ध्या च तान्त्रिकी। गायत्री तान्त्रिकीं जप्त्वा सूर्य्यायार्घ्यञ्च तान्त्रिकम्। प्रजपेद्वैदिकीं नित्यां गायत्रीं परमाक्षरीम्। पूजयेत् पार्थिवं लिङ्गं शिवं परमकारणम्। शक्तिमन्त्रं जपेदिष्टं प्रशस्यं शक्तिपूजनम्। नाशौचं शक्तिमन्त्रेषु शिवमन्त्रे नगात्मजे। श्रीविष्णोस्तान्त्रिके मन्त्रे नाशौचं बाधते प्रिये। इति ते कथितं भेदं गायत्रीतन्त्रसम्मतम्। प्रशस्यं तान्त्रिक कृत्यं वैदिकं वर्जयेत् कलौ। तान्त्रिकी वैदिकी सन्ध्या अन्तः सन्ध्या त्रिधा मता। अशौचं वैदिके शस्तं तान्त्रिके न कदाचन। शौचे वापि अशौचे वा अन्तःसन्ध्या प्रतिष्ठिता। तान्त्रिकी वैदिकी सन्ध्या अन्तःसन्ध्यां विना वृथा। या नित्या ब्रह्मगायन्त्री सर्वदेवेषु सम्मता। स्मृतिशास्त्रे संहितायां पुराणेषु प्रतिष्ठिता। अतः सर्वं परित्यज्य जपेत्तन्त्रमतं कलौ। तान्त्रिकी यदि गायत्री तत्रापि वैदिकी भवेत्। आत्माभिलषितं पिण्डं चतुर्वर्गप्रदायकम्। न कुर्य्याद् यदि देवेशि तत फलं प्रवदामि ते। अपि दैवाद्धि चार्वङ्गि आत्महत्याशतोपमः। परंब्रह्ममयो हत्या आत्महत्या वरानने। अनेनैव विधानेन यज्ञसूत्रं द्विजातये। यो ददाति नरो मर्त्यः सोऽश्वमेधफलं लभेत्। संस्थाप्य ताम्रपात्रेषु दिव्यवस्त्रसमन्वितम्। हिरण्यं मुद्र-

तुल्यञ्च दक्षिणासहितञ्च तत्। यो ददाति नरो भक्त्या विप्राय वेदपारगे। भुक्त्वा स्वर्गं विप्रयोनौ जायते स नरः पुनः। द्विजत्वं प्राप्यसौ मर्त्यः परंब्रह्माधिगच्छति। वामहस्तस्य मूलादि दक्षिणस्य करस्य च। अङ्गुष्ठान्तं भवेत् सूत्रं त्रिगुणं त्रिगुणात्मकम्। सप्रमाणं तदा सूत्रं चतुर्वेदसमन्वितम्। स्वगोत्रप्रवरैर्युक्तं शाखापल्लवसंयुतम्। नागपाशयुतं ग्रन्थिं ब्रह्मविष्णुशिवात्मकम्। द्यङ्गुलान्तरिते सूत्रे वामावर्तक्रमेण च। तिष्ठन्ति सर्वतन्त्राणि रूपादीनि वरानने। परस्य ब्रह्मणो दण्डं यत् सूत्रं त्रिगुणात्मकम्। यत्र श्रीकुण्डली शक्तिश्छत्रं दण्डश्च ब्रह्मणः। अतस्त्रिदण्डो देवेशि कथ्यते तत्त्वदर्शिभिः। गायत्रीं प्रथमे भद्रे गोत्रञ्च तदनन्तरम्। गायत्रीं प्रपठित्वा वै ग्रन्थिं दद्याद्द्विजोत्तमः। प्रतिपाके पठेद्विप्रो गायत्रीं ब्रह्मसम्मिताम्। हस्ताकर्षणमात्रेण गायत्रीं प्रपठेद्द्विजः। एतत्ते कथितं सर्वं यज्ञसूत्रस्य निर्णयम्। (ओं अस्य यज्ञोपवीतस्य अधिष्ठातृदेवता ब्रह्मविष्णुरुद्रईश्वरसदाशिवाः। मम वामस्कन्धनिवासे विनियोगः।) गायत्रीं प्रपठित्वा वै वामस्कन्धे निधापयेत्। विशेषमन्त्र वक्ष्यामि रहस्यसहसंपुटम्। अत्यन्तगोपनं भद्रे नाम्ना मृत्युञ्जयं शृणु॥

गायत्री प्रथमं भद्रे अमृतं सिद्धिदायकम्। द्वितीयमजपा विद्या तृतीयममृतं स्मृतम्। अमृतत्रयसंयुक्तं यदा सिद्धिर्न जायते। स कालः परमब्रह्म तत्र पूजां समाचरेत्। रहस्यातिरहस्यञ्च सारमेतत् प्रकीर्तितम्॥

इत्यागमसन्दर्भे देवदेवी संवादे गायत्रीतन्त्रस्य चतुर्थः पटलः॥

---

श्रीदेव उवाच। सन्ध्यादौ स्मरणं कृत्वा पञ्चत्रिंशद् द्विजोत्तमान्। दीपिनीं दशधा जप्त्वा दशधा प्रणवं जपेत्। गायत्रीं दशधा जप्त्वा सन्ध्याध्यानं ततः परम्। सन्ध्याध्यानं ततः कृत्वा ततः सन्ध्यामुपास्महे। गायत्रीं दशधा जप्त्वा पुनः सन्ध्यां समापयेत्। रहस्यं सप्तसन्ध्याया ज्ञात्वा सन्ध्यां करोति यः। स सन्ध्याफलमाप्नोति अन्यथा शूद्रवत् प्रिये। (गायत्रीदीपिन्यां यां प्रथमं ब्राह्मणस्मरणं ब्रह्मदीपिनीम्। सप्रणवगायत्रीं दशधा दशधा त्रिसन्ध्यञ्च सन्ध्याध्यानं कृत्वा सन्ध्यागायत्रीमुपास्महे। गायत्रीं दशधा जप्त्वा पुनः सन्ध्यां समापयेदिति।) चन्द्रसूर्योपरागे च शूद्रश्राद्धे पुरोहितः। कृतचाण्डालवद्विप्रस्तत्क्षणाद् याति निश्चयम्। हयदानं यथा दुष्यं शूद्रश्राद्धं तथैव च। न दुष्यं मन्त्रदानं स्यात् शूद्रेष्वपि कदाचन। यदन्नं ग्रहणे श्राद्धे दीयते शूद्रजातिभिः। शूद्रान्नं तद्धि चार्वङ्गि कथ्यते तन्त्रकोविदैः। अन्यस्य दिवसस्यान्नं श्राद्धस्य वरवर्णिनि। आमान्नं तच्च सर्वत्र शूद्रान्नं न च कुत्रचित्। शूद्रान्नपदमात्रेण सिद्धान्नं कथ्यते बुधैः। आदाय शूद्रसिद्धान्नं यथा विप्रः पराभवम्। गायत्रीरहितो विप्रस्तथा पराभवं सदा। आद्यन्ते

यज्जपं भद्रे गायत्र्या दशधा दश। आद्यन्ते दशधा यद् यद् सन्ध्याया अङ्गमेव तत्। न नित्यं तज्जपं भद्रे न च कार्य्यं कदाचन। कुशासने समासीनः प्राङ्मुखो वाप्युदङ्मुखः। गायत्रीं प्रजपेद्धीमान् अष्टोत्तरशतं गृहे। जले यदि जपेद्विद्यां न दोषस्तत्र जायते। जलशायी यदा विष्णुः गायत्रीं प्रजपेज्जले। दशधा एकधा वापि गायत्रीं प्रजपेत् सुधीः। अन्यथा विफला सन्ध्या सफला न कदाचन। गायत्रीरहितो विप्रः स कथं ब्राह्मणो भवेत्। ओं शन्नादियुक्तं वाक्यानि प्राणायामादिकानि च। गायत्रीसर्गपर्य्यन्तं सन्ध्येति परिकीर्तिता। जीवव्यक्तिः स एवात्मा एक एव न चान्यथा। द्वीतीयस्तत्र गायत्री जायते ब्राह्मणः स्वयम्। शरीरी तत्र जीवात्मा शरीरं तस्य ब्राह्मणः। सदा पवित्रं विप्रात्मा अतः पापैर्न लिप्यते। रूपादितत्त्वमाधारमात्मा ह्याधेयमुच्यते। गायत्री-स्मरणात् पापमत एव न विद्यते। शरीरे परमेशानि पद्मपत्रे यथा पयः। गायत्रीनिर्मितो देहो यस्य जीवस्य पार्वति। ब्राह्मणः कथ्यते तेन मुनिभिस्तत्त्वदर्शिभिः। जीवात्मा न च जप्तव्यो महाविद्या दशाक्षरी। सहसा जायते जन्म रेतःशोणितसंपुटे। इति ते कथ्यते वेदे परंब्रह्ममये घटे। कुलशास्त्रे ब्रह्मघटे गायत्रीकुण्डलीषु च। गायत्रीसहितश्चात्मा एकता लयमाप्नुयात्। अतोऽत्र कथ्यते वेदे कुलीनश्च द्विजः सदा। शाठ्यादवज्ञया भद्रे न जपेत तु द्विजो हि यः। यवनस्य तु वीर्य्येण तस्य जन्म सुनिश्चयः। गायत्रीष्वप्यविश्वासो यस्य विप्रस्य जायते। स एव यवनो देवि गायत्रीं स कथं जपेत्। स पापी यवनो देवि यद्देशे विद्यते सदा। तद्देशं पतितं मन्ये राजा पातकसंयुतः। तस्य संसर्गिणो विप्राः पतितास्ते च निन्दिताः गायत्रीरहितस्यान्नं यवनान्नाधमं स्मृत-म्। यवनान्नं वरं भुङ्क्ते न जलं तस्य पार्वति। यदि दैवाच्च गोहत्या जायते ब्राह्मणादिषु। पञ्चाहाभ्यन्तरे कुर्य्याद् यतिचान्द्रायणं कलौ। तच्च पञ्चदिनादूर्ध्वं चान्द्रायणशतं चरेत्। कथोपकथनाच्चैव भोजनाद्भ्र-मणाद् यथा। अन्नसंख्यासमं पापं वाक्यमानेन गोवधम्। नित्यं प्रवर्द्धते तस्य कलिकाले विशेषतः। आलोक्य तन्मुखं लोकस्तत्समः पातकी यथा। यतिचान्द्रायणं कृत्वा तल्लोकः शुद्धतामियात्। सप्तमेऽहनि सम्प्रा-प्ते स भवेद्ब्रह्मघातकः। निष्कृतिर्नास्ति तत्रापि प्रायश्चित्तं न विद्यते। नानापापयुतो भूत्वा व्याघ्रवद् वर्द्धते कलौ। कृत्वा च तस्य संसर्गं व्याघ्रवद्वर्द्धते सदा। एकपादं द्विपादं वा त्रिपादं युगभेदतः। सत्ये तथैकपादं स्यात् त्रेतायाञ्च द्विपादकम्। द्वापरे च त्रिपादं स्यात् कलिकाले चतुर्गुणम्। स्वहस्तेन कृता हत्या दैवाद्या सर्वजातिषु। यतिचान्द्रायणं शस्तं पादादौ न कलेर्मतम्। गायत्रीरहितस्यापि

पापमेवं प्रवर्त्तते। यस्य गेहेषु गोहत्या यवनेन कृता कलौ। शतचान्द्रायणं कृत्वा गोस्वामी शुद्धतामियात्। इति ते कथितं दैवं परं देव कलेर्मतम्। स्वहस्तमारणाच्चैव गोवधं दूषितं यथा। गायत्रीरहितो विप्रस्तथैव दूषितः सदा। आलापाद्गात्रसंस्पर्शान्निःश्वासात् सहभोजनात्। ये लोकास्तस्य संसर्गे तेऽपि तद्दोषभागिनः। यतिचान्द्रायणं कृत्वा ते लोकाः शुद्धतामियुः। अन्यस्य यदि गोहत्या यवनेन कृता कलौ। अन्यवेश्मनि सा हत्या प्राप्नुयान्निश्चयं गृही। अर्द्धं कृत्वा तु गोस्वामी गृहस्वामी तथैव च। यतिचान्द्रायणं कृत्वा पूतो भवति तत्क्षणात्। प्रसङ्गात् कथितं तुभ्यं दैवाद् गोवधनिर्णयम्। गायत्र्याः कारणमात्मा आत्मनः कारणं स च। उभयोः कारणं मन्त्रं यज्ञात्ममात्मना निशम्। अन्तरात्मसमं आत्मा गायत्री परमात्मना। ज्ञानात्मसहितं मन्त्रं यज्ञात्ममात्मना निशम्। एतत्ते कथितं सूक्ष्मं परमार्थनिरूपणम्। प्रथमे दशधा जप्त्वा गायत्रीं ब्राह्मणं प्रिये। जीवात्मना च जप्तव्यं दशधा प्रजपेत्ततः। अधोऽहं तद्वयं जप्त्वा यस्य य इष्टदैवतः। प्रथमाष्टाक्षरं सृष्टिं जप्त्वा इष्टं जपेत् सुधीः। द्वितीयाष्टाक्षरं जप्त्वा ततस्तु पूजयेन्मनुम्। तृतीयाष्टाक्षरं जप्त्वा इष्टमन्त्रं ततो जपेत्। सृष्टिस्थितिलयं देवि जपनिर्णयलक्षणम्। यथाशक्ति जपं कृत्वा पूर्ववत् पूजयेत्ततः। शालग्रामशिलामग्रे कृत्वा दिव्यं करोति यः। शालग्रामशिला स्पृष्ट्वा यदि दिव्यं करोति यः। कर्त्ता कारयिता भद्रे त्रिकोटिकुलसंयुतः। रौरवं नरकं याति नान्यथा च कदाचन। तथा गङ्गोदकं ताम्रं गोमयं गोरजस्तथा। सत्यं वापि असत्यं वा स्पृष्ट्वा दिव्यं करोति यः। कर्त्ताथ रौरवं याति तथा कारयिता प्रिये। उभयोः पुनरावृत्तिर्नरयोनिषु नास्ति वै। तस्यास्ति पुनरावृत्तिर्व्याघ्रशूकरयोनिषु। दिव्यकर्तुः कारयितुर्जपपूजा वृथा यथा। गायत्रीरहितस्यापि नरकं चोत्तरोत्तरम्। पुराणं संहिताशास्त्रं शूद्रस्य निकटे यथा। पठित्वा शूद्रवद्विप्रो गायत्रीरहितस्तथा। पुराशब्दः प्राचीवाची णश्च गायत्रीवाचकः। पुरा प्राचीनवृत्तान्तं पापपुण्यसमन्वितम्। प्राप्नोति श्रवणात् पुण्यं श्रवणात् पापनाशनम्। अतोऽत्र कथ्यते वेदे पुराणं ब्रह्मसम्मितम्। पुराणं संहिताशास्त्रं स्मृतिशास्त्रं तथैव च। गायत्र्याः परमेशानि सदर्थं ब्रह्मसम्मितम्। श्रवणे नाधिकारोऽस्ति शूद्राणाञ्च कदाचन। एतत्ते कथितं देवि ब्रह्मतत्त्वस्वरूपिणम्। ब्राह्मणात् परतरं किञ्चिद् भूतले नास्ति पार्वति। शूद्रोऽपि अधिकारी स्याद् यज्ञसूत्रप्रदानतः। परीक्षा उपवीतस्य ब्राह्मणस्य कलौ यथा। ब्राह्मणस्य विवाहेषु जातिध्वंसे सुरार्चिते। अग्निं प्रज्वाल्य विधिवत् विधिञ्च पूजयेद् विधिम्। दत्त्वा

पञ्चाहुतिं वह्नौ हुतयेत्तदनन्तरम्। प्राणादिपञ्चभूतानां होमं कुर्य्याद्विशालधीः। ततः स्कन्धात् समुत्तोल्य उभयोरुपवीतकम्। गायत्रीं प्रपठित्वा वै निःक्षिपेद्वह्निमण्डले। यस्य सूत्रं भवेद्भस्म निश्चयं पतितः स च। उभयोर्यदि भस्म स्यात् तदैव समता द्वयोः। विवादो ब्राह्मणस्त्रीषु जायते यदि सुन्दरि। परीक्षैवं तदा भद्रे तत् पतेर्नात्र संशयः। कलौ दुष्टं महेशानि ब्राह्मणे घृतकाञ्चनम्। निस्तेजाः ब्राह्मणाः सर्वे कलिकाले विशेषतः। सतेजा उपवीतश्च उपवीतं परीक्षयेत्। एतत् तु ब्राह्मणं तन्त्रं यस्य वेश्मनि संस्थितम्। कैलाससदृशं भद्रे मन्दिरं तस्य नान्यथा। मन्दिरं परमेशानि एतत्तन्त्रविवर्जितम्। श्मशानं परमेशानि मन्दिरं तस्य नान्यथा। ब्रह्मचर्य्येषु शूद्राणां नाधिकारः कदाचन। ब्रह्मचर्य्यं ब्राह्मणस्य कलौ नास्ति कदाचन। शूद्रसेवा सदा यस्य विप्रस्य क्षत्रियस्य वा। द्वौ यथा नरकं यातः। शूद्रेण सह रौरवम्। गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत्। एतत्तन्त्रमविज्ञाय अन्यशास्त्रं पठेत् तु यः। स यथा शूद्रवद्विप्रो गायत्रीरहितस्तथा। ब्राह्मणक्षत्रवैश्यानां शूद्राणाञ्च स्त्रियस्तथा। सङ्गमाद् भूतयक्षस्य यक्षिणी भूतिनी यथा। तस्याः सङ्गममात्रेण भूतः स्यात् तत्पतिर्यथा॥ गायत्रीरहितो विप्रस्तथैव याति शूद्रताम्। न चात्र वर्णविश्लेषो न च वा पददूषणम्। नात्र सन्धिर्महेशानि न चात्र श्लोकयोजना। पुरातनो पूर्णविद्या परंब्रह्मप्रकाशिनो। अनन्तमहिमायुक्तानन्तव्याकरणैर्युता। स्वभावतः सदा सिद्धा गायत्री परदेवता। यः स्वरः प्रथमे उक्तो ब्रह्मविष्णुशिवात्मकः। तदाकारः स्वरः पञ्चदशकुमाररञ्जितः। वायुवीजसमाकारो विसर्गान्तः स्वरस्ततः। गायत्र्यन्ते महेशानि द्वितीये सर्वभावना। सर्वमन्त्रेषु विद्यासु नास्ति वै पददूषणम्। पदानां साधनं कृत्वा गायत्रीं प्रजपेद्व यदि। ब्रह्मविद्या च गायत्री सहसा कृत्रिमा भवेत्। यथा शूद्रो हविष्याशी राममन्त्रं जपेत् सदा। स यथा रौरवं याति गायत्रीरहितस्तथा। ब्रह्मचर्य्येषु शूद्राणां नाधिकारः कदाचन। ब्रह्मचर्य्यं ब्राह्मणस्य कलौ नास्ति कदाचन। पूर्वजन्मनि यः शत्रुः स शत्रुरिह जन्मनि। विधृत्य कपटी वेशमागतः शत्रुसन्निधिम्। द्यूतकार इवारम्भं कृत्वा सदसि संविशेत्। उपविश्य सभामध्ये निन्दावादे प्रवर्त्तते। अज्ञानादुभयोर्योगात् कर्मसूत्रस्य योजनम्। वृथा शिवो वृथा शक्तिः सूर्य्यो लम्बोदरो वृथा। वृथा गङ्गा च गायत्री वृथा सन्ध्या वृथा बलिः। तथैव ब्राह्मणं यज्ञं सर्वं व्यर्थं कदर्थनम्। सर्वं मिथ्यैवेह लोकः सत्यं कृष्णं भजाधुना। गीतालापमयं भावं श्लोकं भावय सत्तमे। श्रुत्वा शत्रोर्मुखाच्छत्रोर्मतिनाशः प्रजायते। सर्वं त्यक्त्वा शत्रुवाक्यात् कृष्णदेवं समर्चयेत्। शत्रोर्वाक्यं ततः श्रुत्वा सर्वपूजां परित्यजेत्। तस्मै

देवस्तथा रुष्टः कृष्णः कमललोचनः । शिवशक्तिमयं सर्वं ब्रह्माण्डं कोटिकोटिशः । यः शिवः कृष्ण एवात्मा यः कृष्णः शिव एव सः । शिवनिन्दां हरिः श्रुत्वा हृदि शल्यमिवार्पणम् । मतिनाशस्य यद्धर्म्मो महापातकसंयुतः । व्यर्थं भवति तद्धर्मो गोहत्यासहितः सदा । ब्रह्महत्या च गोहत्या स्त्रीहत्या प्रतिवासरे । कृष्णहत्यामवाप्नोति लिदानं विना प्रिये । बलिदानं महेशानि सर्वपूजासु शस्यते । अश्वमेधे राजसूये गोवधे क्षुद्रपूजने । पूजने सर्वदेवानां बलिदानं प्रशस्यते । विना बलिप्रदानेन यदि शक्तिं प्रपूजयेत् । शक्तिहत्यामवाप्नोति ब्रह्महत्या पदे पदे । शक्तिपूजां विना भद्रे यदि कृष्णं प्रपूजयेत् । सा पूजा काष्ठपूजावद्गोहत्या कृष्णपूजने । शालग्रामशिलाग्रे कृत्वा दिव्यं करोति यः । शालग्रामादिकं स्पृष्ट्वा यदि दिव्यं करोति च । तथा गङ्गाजलादींश्च ताम्रञ्च गोमयं तथा । तुलसीं च महादेवि सुवर्णं गोरजस्तथा । वेदादीन्यपि पुण्यानि द्रव्याण्यन्यानि यान्यपि । तीर्थपीठादिनामानि स्पृष्ट्वा दिव्यं करोत्यपि । दिव्यकर्तुः कारयितुर्नरकान्नच निष्कृतिः । पूर्वोक्तं यन्महेशानि तत् पापस्य विशुद्धये । यदि ब्रह्मवधः प्रोक्तः प्रायश्चित्तं चरिष्यति । तस्मात् पापात् तदा शुद्धो नान्यथा कल्पकोटिभिः॥

अपरञ्च प्रवक्ष्यामि शृणुष्व कमलानने । गङ्गास्नानं हि नन्दादौ सर्वपापप्रणाशनम् । गङ्गातोये कृतं दिव्यं तत् पापं नगनन्दिनि । महापातकोपपापं गङ्गास्नानाद्विनश्यति । गङ्गायां मौषलं स्नानं महापातकनाशनम् । सर्वतत्त्वमयी गङ्गा परमात्मस्वरूपिणी । सर्वतीर्थमयी गङ्गा सर्वदेवमयी ध्रुवा । स्नानमात्रेण गङ्गायां पापं ब्रह्मवधादिकम् । दुराधर्षं कथं याति चिन्तयेद् यो वदेदिति । तस्याहं प्रददे घोरं कोटिब्रह्मवधोद्भवम् । स्तुतिवादमिमं मत्वा कुम्भीपाके महीयते । आकल्पं नरकं भुक्त्वा ततो जायेत गर्दभः । गङ्गासमं त्रिभुवने नास्ति निस्तारकारणम् । नानारत्नमयं दिव्यं मन्दिरं यानमेव च । तथा विलक्षणां शय्यां रत्नसिंहासनन्तथा । छत्रं रत्नमयं दिव्यं तथैव रत्नपादुकाम् । सरोवरं तथा दिव्यं अन्नमेरुं तथैव च । गुरुं विलङ्घ्य यो मूढो विष्णवे विनिवेदयेत् । पुरीषञ्च तथा मूत्रं जलमन्नं भवेद् ध्रुवम् । गृहं यानं तथा शय्या पादुका छत्रमुत्तमम् । विष्ठापुञ्जं भवेत् सर्वं शिष्यस्तत्र कृमिर्यथा । भविष्यति न सन्देहः कलिकाले च नान्यथा । कोटिवंशान् समादाय विष्ठायां जायते कृमिः । एवं हि शारदीं पूजां यदि नो कुरुते नरः । स चैवं फलमाप्नोति नान्यथा च कदाचन । गुरोराज्ञां विना यश्च कन्यादानं करोति च । मेषी भवति सा कन्या दाता मेषो भवेद् ध्रुवम् । मेषोमेषेण शृङ्गारी जायते परजन्मनि । वरं कन्याविक्रये च पापमेवं न जायते । अनन्तसिद्धिदा चाज्ञा गुरुदेवस्य सुन्दरी । गुरोर-

भावे चार्वङ्गि तथाभावे कुलस्य च। न दोषो जायते भद्रे मम वाक्ये च सुन्दरि। एतत् सर्वं वरारोहे प्रतिमन्वन्तरे कलौ। भविष्यति न सन्देहो मम वाक्यं सुनिश्चयम्। बलिदानं विना हत्या हत्या सर्वत्र गर्हिता। एवं निन्दापरो भूत्वा त्रिकोटिकुलसंयुतः। सर्वधर्मं परित्यज्य स यथा रौरवं व्रजेत्। गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत्। यथा वक्ता तथा श्रोता प्रतिपालयिता तथा। गायत्रीरहितो विप्रस्तथैव नरकं व्रजेत्। प्रथमाष्टाक्षरं भद्रे ऋग्वेद इति कथ्यते। द्वितीयाष्टाक्षरं भद्रे सामवेदोऽभिधीयते। तृतीयाष्टाक्षरं भद्रे यजुर्वेदश्च कथ्यते। चतुर्थाष्टाक्षरं भद्रं अथर्ववेद उच्यते। वेदमाता च गायत्री अतएव प्रगीयते। उपहारः पशोर्मांसं सतत्त्वं शोणितं बलिम्। पञ्चभूताक्षरमयं जीवात्मसहितं बलिम्। ज्योत्स्नाशक्तिसमायोगादुपहारमुपस्थितम्। अतएव हि सर्वत्र बलिरित्यभिधीयते। यथा पूज्यस्तथा पूजा पूजकश्च तथैव च॥ दत्त्वा पूजां देवतायै पूजकः स्वर्गमश्नुते। बलिवाचकपूजा स्यात् पूजकः सेवकः स्मृतः। यस्योद्देशं सा पूजा स्यात् निष्कामो मोक्षमाप्नुयात्। यदि न दीयते पूजा देवतायै नराधमैः। दुर्बलः कुक्कुरो भूत्वा परजन्मनि जायते। सर्वेषां मृतजन्तूनां पूतिमांसं समश्नुते। यो मूढः कृतचाण्डालो बलिदानं निषिध्यति। तस्य जिह्वा छुरिकया कर्तनं पापमोचनम्। तदा सद्गतिमाप्नोति अन्यथा शूकरो भवेत्। नररूपबलिर्भूत्वा परजन्मनि जायते। बलिदानं महेशानि स्वर्गसोपाननिर्णयम्। निष्कामनात्तदा भद्रे मोक्षसोपाननिर्णयम्। स्वर्गभोगं विना भद्रे न हि मुक्तिः प्रजायते। आरुह्य बलिसोपानं परंब्रह्माधिगच्छति। कुतो हत्या च पूजायां कस्य हत्या वरानने। सर्वं ब्रह्ममयं ह्येतत् पूजाकाले विशेषतः। इति यो वेत्ति स ज्ञानी स एव वैष्णवोत्तमः। स शाक्तः शिवभक्तश्च परंब्रह्माधिगच्छति। मासि मासि प्रदातव्यं बलिदानं द्विजातिभिः। शुक्लाष्टम्यां विशेषेण पूजयेत् परमेश्वरीम्। उपोष्य विधिवत् पूज्या गन्धपुष्पादिभिः सुधीः। एकादशीकोटिफलं शुक्लाष्टम्यामुपोषणे। शुक्लाष्टम्यां बलिं दत्त्वा अश्वमेधफलं लभेत्। शरत्काले महाष्टम्यां न च दद्यान्महाबलिम्। प्रत्यहं यस्तु पूतात्मा ददाति बलिमुत्तमम्। शारदायै बलिं दद्यात् न हत्या न च दूषणम्। कृष्णच्छागद्वयं भद्रे महिषद्वयमेव च। महाबलिरिति प्रोक्तो महाष्टम्यां परित्यजेत्। शुद्धसत्त्वात्मकः शुद्धः सत्त्वनिर्मितविग्रहः। न मर्त्यः परमेशानि बलिदानं परित्यजेत्। तत्राह परमेशानि शुद्धसत्त्वात्मकं शृणु। निद्रया रहितो यस्तु क्षुतृष्णारहितस्तथा। ज्ञानशक्तिमयो नित्यः परमानन्दविग्रहः। शुद्धसत्त्वात्मकस्तेन कथ्यते तन्त्रकोविदैः। इच्छाशक्तिरजोरूपा सा च सृष्टिस्वरूपिणी। कथ्यते रजोगुणस्तेन मुनिभिस्तत्त्वदर्शिभिः। वैष्णवी ज्ञानशक्तिर्या सर्वभूते दयामयी। अतः सत्त्वगुणः ख्यातः कथ्य-

ते तन्त्रकोविदैः। अनेककोटिब्रह्माण्डं रजः सत्त्वात्मकं मतम्। कृते बलिप्रदाने च चण्डिकायै प्रसन्नधीः॥ रजस्तमात्मकं देहं त्यक्त्वा सत्त्वात्मको भवेत्। शुद्धसत्त्वात्मको भूत्वा महाभोगमवाप्नुयात्। विना बलिप्रदानेन कुतः सत्त्वात्मको भवेत्। बलिभिः साध्यते मुक्तिर्बलिभिः साध्यते दिवम्। बलिभिः साध्यते धर्मो ह्यर्थश्च बलिभिर्भवेत्। सगुणो यो नरो राजा बलिं दद्याद्दशाब्दतः। बलिदानं विना मांसं यो भुङ्क्तेऽज्ञानमोहितः। ग्रासे ग्रासे मलं भुङ्क्ते शूकरस्य च नान्यथा। बलिदानं विना हत्यां यः करोति नराधमः। अधमः कथ्यते तेन महाबौद्धश्च कथ्यते। यस्य यः कुरुत हत्यां स तस्य परजन्मनि। कुरुते नात्र सन्देहः सत्यं सत्यं न चान्यथा। राजा श्रीसुरथो नाम्ना पुरासीन्मांसलोलुपः। भुङ्क्ते ह्यज्ञानतो मांसं हत्वा च विविधान् पशून्। स राजा तेन पापेन पीडितः शत्रुभिः सदा। शत्रुणा पीडितो भूत्वा प्रययौ मेधसालयम्। प्रणम्य मेधसं राजा वृत्तान्तं विनिवेदयेत्। किं करोमि क्व गच्छामि अब्रवीत् स पुनः पुनः। स मुनिस्तद्वचः श्रुत्वा आश्वास्य सुरथं नृपम्॥

मेधस उवाच। का चिन्ता राजशार्दूल जपस्वैकं महामनुम्। पञ्चाक्षरीं तस्य कर्णे कथयामास मेधसः। ते पापाः काकरूपाश्च निर्ययुः कर्णगह्वरात्। तान् दृष्ट्वा सुरथो राजा उवाच मेधसं मुनिम्। किमेतद्ब्राह्मणश्रेष्ठ यदि जानासि मे वद॥

मेधस उवाच। बलिदानं विना हत्या या कृता मांसलालसात्। ते पापाः काकरूपेण निर्ययुस्तव विग्रहात्। पञ्चाक्षरबलाद्राजन् ते पापा निश्चयं ययुः। पशुहत्याप्रमाणेन दिवसे दिवसे नृप। निजगात्रस्य रुधिरं दत्वा पापं प्रमोचय। अधुना भज राजेन्द्र भवानीं भवमोचनीम्। भवानीं त्रिदशाराध्यां चतुर्वर्गप्रदायिनीम्। तच्छ्रुत्वा वचनं तस्य स राजा पूजने मनः। ददौ परमयत्नेन त्रिभिर्वर्षैः सिद्धताम्। सम्प्राप्य राज्यं सुरथो बलिदानप्रभावतः। बलिदानस्य माहात्म्यं न हि वक्तुं क्षमो मम। दिवसे दिवसे राजा बलिं दत्वा सहस्रशः। बुभुजे पृथिवीपालो मेदिनीं सागरावधिम्। लक्षवर्षप्रमाणेन मेदिनीं बुभुजे नृपः। न शर्म लेभे राजा च मनसा चिन्तितः सदा। प्रत्यहं बलिदानेन न जाने किं भविष्यति। एतस्मिन् समये आयान्नारदो नृपमन्दिरम्। पूजयामास सुरथः सशोको नारदं मुनिम्॥

सुरथ उवाच। त्वं हि विप्र द्विजश्रेष्ठः सर्वशास्त्रार्थपारगः। विशेषं ब्राह्मणश्रेष्ठ वेदार्थं कथय प्रभो॥

श्रीनारद उवाच। विशेषं शृणु राजेन्द्र वेदध्यानं सनातनम्। वेदमन्त्रं महाराज परब्रह्ममयं सदा। चतुर्भुजां चतुर्वक्त्रां शुद्धस्फटिकसन्निभाम्। शुक्लपद्मसमासीनां पद्मगन्धमयीं सदा। वराभयधरां नित्यां

वीणापुस्तकधारिणीम्। भ्रमद्भ्रमरनीलाभनयनत्रयराजिताम्। सिन्दूरतिलकोद्दीप्तामञ्जनाञ्चितलोचनाम्। कृष्णां शुकपरीधानां चलत्कुण्डलचञ्चलाम्। हीरकद्युतिसङ्काशां दशदिग्ज्योतिरुज्ज्वलाम्। हास्ययुक्तां प्रसन्नास्यां नवयौवनसंयुताम्। शरत्पूर्णशशिमुखीं पीनोन्नतघनस्तनीम्। शङ्खकङ्कणकेयूरनानाभरणमोहिनीम्। नानालावण्यसंयुक्तां शुक्लवस्त्रोत्तरीयिणीम्। पञ्चाशद्वर्णहाराढ्यां शान्तां सामसमाश्रयाम्। साममन्त्रं प्रवक्ष्यामि ह्यतिगुह्यं परात्परम्। ओं ओं ओं सामवेद स्वाहा ओं ओं ओं। गौराङ्गीं दीर्घनयनां चतुर्वक्त्रां चतुर्भुजाम्। रक्तपद्मसमासीनां रक्तांशुकपरिच्छदाम्। वरदानरतां देवीं वीणापुस्तकधारिणीम्। दिव्यगन्धमयीं नित्यां शङ्खकङ्कणमण्डिताम्। मुक्ताहारलतोपेतां कदम्बकोरकस्तनीम्। पूर्णचन्द्रमुखीं पूर्णां पीतवस्त्रोत्तरीयिणीम्। सर्वशास्त्रमयीं विद्यां यजुर्वेदसमाश्रयाम्। मन्त्रमस्य प्रवक्ष्यामि शृणु सुरथभूपते। ओं ओं ओं यजुर्वेद स्वाहा ओं ओं ओं। रक्ताङ्गीं पीतवसनां रक्तपद्मासनस्थिताम्। रक्ताभरणसंयुक्तां रक्तगन्धप्रलेपिताम्। बन्धनीरक्तनयनां कृष्णवस्त्रोत्तरीयिणीम् चतुर्भुजां सुचतुरां चतुर्वक्त्रां बृहत्कटीम्। सिन्दूरतिलकोद्दीप्तां दीर्घकेशीञ्च सुस्तनीम्। सर्वाङ्गसुभगां भव्यां सर्वसौभाग्यशालिनीम्। मन्त्रमस्याः प्रवक्ष्यामि शृणु गुह्यं नृपोत्तम। ओं ओं ओं ऋग्वेद स्वाहा ओं ओं ओं। अधुना मनुजश्रेष्ठ अथर्वं कथयामि ते। दलिताञ्जनसङ्काशां कृष्णवस्त्रपरिच्छदां। कृष्णपद्मासनगतां चतुरां चतुराननाम्। चतुर्भुजां त्रिनेत्राञ्च सिन्दूरतिलकोज्ज्वलाम्। कटाक्षविशिखोपतनयनत्रयसंयुताम्। कृष्णाभरणसंयुक्ताम्। कृष्णगन्धप्रलेपिताम्। कृष्णपद्मसमासीनां कृष्णपुष्पोपशोभिताम्। पञ्चाशद्वर्णहाराढ्यामथर्वं समुपास्महे। शृणु मन्त्रं प्रवक्ष्यामि सावधानेन धारय। ओं ओं ओं अथर्ववेद स्वाहा ओं ओं ओं। एतत्ते कथितं सर्वं ध्यानमन्त्रं पृथक् पृथक्। गायत्री च स्वयं वेदः प्रणवत्रयसंयुतः। गायत्री यदि पुंस्का स्याद्वेदमाता तथापि सा। परंब्रह्ममयं तत्त्वं सर्वतन्त्रोत्तमोत्तमम्। एतत्तत्वं विना राजन् द्विजश्च शूद्रवत् सदा। वेदध्यानं वेदमन्त्रं ह्यज्ञात्वा शूद्रवद्द्विजः। विशेषतः कलियुगे शूद्रतुल्यो द्विजो भवेत्। तस्मादवश्यं ज्ञातव्यं ध्यानमन्त्रं नृपोत्तम। प्रणवे ह्यधिकारोस्याद् गायत्रीषु तदैव हि। मालया न जपेन्मन्त्रं गच्छन् पथि कदाचन। जप्त्वा मन्त्रं मूढः सर्पयोनिषु जायते। करमालासु जप्तव्यं गच्छन् पथि नृपोत्तम। मालया पथि जप्त्वा वै यथा हानिः प्रजायते। वेदमन्त्रविहीनश्च तथा याति पराभवम्। उपविश्य जपेन्मन्त्रं मालया नृपनन्दन। गायत्री च तथा सन्ध्या वेदध्यानं तथा मनुम्। कलिकाले महाराज ब्राह्मणेषु प्रशस्यते अन्यत् सर्वं

वेदमतं कलौ विवर्जयेद्विजः। परस्य ब्रह्मणो बिन्दुर्वेदमाता तथैव हि। एतत् तत्त्वमविज्ञाय ब्राह्मणः शूद्रवत् सदा। वेदपाठे ब्राह्मणस्य नाधिकारः कलौ युगे। सोऽहं स्नानं विना राजन् यथा स्नानं वृथा भवेत्। निरञ्जनः सन् महाराज जले शिरसि एकधा। हंसेन पुटितं कृत्वा इष्टमन्त्रं स्मरेत् सकृत्। इष्टेन पुटितं हंसं द्वितीयं स्नानमाचरेत्। हंसेन पुटितं इष्टं त्रिस्नानं मनुजेश्वरः(१) * * नः पुटितं सर्वं हंसमिष्टं यथा तथा। सोऽहं स्नानमिदं प्रोक्तं जीवस्नानमिदं नृप। अतः स्नानमिदं राजन् कथितमतिगोपनम्। सोऽहं स्नानेन राजेन्द्र कोटितीर्थफलं लभेत्। अनेनैव हि स्नानेन त्रिकोटिकुलमुद्धरेत्। सोऽहं स्नानेन गायत्र्याः स्नानं भवति भूपते। सोऽहं स्नानं विना राजन् कुशताम्रेण किं पुनः। किं पुनः स्वर्णतोयेन शङ्खतोयेन किं पुनः। सोऽहं स्नानेन चात्मीयमात्मनः स्नानमुच्यते। अतएव महाराज स्नानमित्यभिधीयते। सोऽहंस्नानं विना राजन् बाह्यस्नानं वृथा यथा। शिवहीनं तथा मन्त्रं जप्त्वा निरयमाप्नुयात्। राममन्त्रं कृष्णमन्त्रं शिवहीनं वृथा यथा। तथाच चरणैर्हीनं तन्मन्त्रं विफलं यथा। आदिशून्यं पादहीनमन्तः शून्ये तथैव च। शिवहीनं भवेन्मन्त्रं जप्त्वा निरयमाप्नुयात्। राममन्त्रे कृष्णमन्त्रे इति राजन् प्रशस्यते। न शिवे शस्यते राजन् शक्तिमंत्रे न दूषणम्। दुर दृष्टवशाद्राजन् लब्ध्वा मूर्खगुरोर्मुखात्। प्रणवैः पुटितं कृत्वा लब्ध्वा चान्यगुरोर्मुखात्। प्रजप्य फलमाप्नोति सर्वावयवसयुतम्। गायत्र्याः स्नानमात्रेण तत्त्वस्नानं प्रजायते। मनोजीवात्मनः शुद्धिस्तत्त्वषोढा प्रजायते। शिवशक्तिसमायोगादन्तः सन्ध्या यथात्मनः। अन्तःसन्ध्यां विना राजन् बाह्यसन्ध्या वृथात्मनः। तान्त्रिकी वैदिकी सन्ध्या बाह्यसन्ध्या प्रकीर्तिता। अन्तः स्नानं तथा सोऽहं सर्वतीर्थमयं नृप। छागमेषं महाराज कृतादियुगचतुष्टये। विशेषतः कलियुगे प्रशस्तं नृपनन्दन। बहुभिर्बलिदानेन पूजयेत् तत्रजातिकः। सत्ये सकृन्महाराज त्रेतायां द्विगुणं तथा। द्वापरे त्रिगुणं दद्यात् कलौ चतुर्गुणं बलिम्। कृतादिषु युगे विप्रो बलिं दद्यादशङ्कितः। कलिकाले महाराज दद्याद्विप्रो चतुर्गुणम्। कृष्णच्छागद्वयं राजन् तथा च महिषद्वयम्। सकृद्बलिरिदं प्रोक्तं दरिद्र केवलं सकृत्। यथा विभवमात्रेण वित्तशाठ्यं परित्यजेत्॥ श्रीसुरथ उवाच। ब्रह्मपुत्र नमस्तुभ्यं कृपया कथ्यतां द्विज। किमत्र पशुहत्यायां बलिदानेन ब्राह्मणः। भविष्यति महाभाग कृपया सत्वरं वद। दासोऽस्मि तव विप्रेन्द्र मनो मे दूयते सदा। त्वमेव संशयच्छेत्ता संशयं छिन्धि मे द्विज॥

नारद उवाच। धन्यस्त्वं सुरथो धन्यः शैवस्त्वं हि शिवः स्वयम्। शक्तिस्त्वं हि स्वयं शक्तिर्विष्णुस्त्वं वैष्णवोत्तमः। भावानीपूजनफ-

(१) * * एतच्चिन्हितस्थलं दुष्प्राप्यम्।

लादद्य त्वं वैष्णवाग्रणीः। अद्य मे सफलं जन्म तव दर्शनमात्रतः। प्रत्यहं तव राजेन्द्र अश्वमेधसहस्रशः। भवन्ति निश्चयं यज्ञा बलिदानप्रभावतः। किं बहूक्त्या महाराज त्वमेव वैष्णवाग्रणीः। यत्र यत्र पुराणेषु निषेधं कुरुते बलेः। तत्तद्बौद्धमतं राजन् न च वेदेषु सम्मतम्। यत् तु पुराणनाख्याने बलिदानं निषिध्यते। तत् तु बौद्धमतं राजन् न च वेदेषु सम्मतम् त्रिविधा बलयः प्रोक्ता उत्तमाधममध्यमाः। उत्तमश्चोत्तमं दद्यान्मध्यमो मध्यमं तथा। अधमोऽप्यधमं दद्यादित्युक्तस्त्रिविधो बलिः। कृष्णच्छागद्वयं राजन् महिषद्वितयं तथा। शुक्लाष्टम्याश्च शरदि न दातव्यं कदाचन। एको वाप्यथवानेकः कुष्माण्डो दीयते यदि। अधमः कथ्यते देवि ह्यधमेऽप्यधमा गतिः। दशसंख्या बलिर्यत्र मध्यमत्वेन कथ्यते। सात्त्विको उत्तमा पूजा यदि दद्यान्महाबलिम्। अष्टमीनवमीसन्धौ दद्याद् यत्नान्महाबलिम्। शतं सहस्रं लक्षं वा अयुतं कोटिकोटिशः। शस्यते नृपतिश्रेष्ठ सात्त्विके पूजने बलिः। एकेन बलिदानेन चतुर्वर्गमाप्नुयात्। बहुभिर्बलिदानैस्तु परंब्रह्ममयो भवेत्। बहुभिर्बलिदानैस्तु जपयज्ञैस्तु भूपते। क्रियते सात्त्विकी पूजा सात्त्विको तेन कीर्तिता। दशभिः पशुभिः पूजा जपयज्ञे तथैव च। या कृता शारदी पूजा राजसी तेन कीर्तिता। बलिभिः पञ्चभिः पूजा तामसी तेन कीर्तिता। सात्त्विकोपूजनफलाच्छुद्धसत्त्वात्मको भवेत्। वेदे बौद्धे विवादोऽस्ति वेदोक्तंप्रतिपालयेत्। बौद्धोक्तं राजशार्दूल दूरतः परिवर्जयेत्। बौद्धो वदति राजेन्द्र ईश्वरो नास्ति नास्ति वै। अहमेवेश्वरः साक्षादिति बौद्धोऽब्रवीद्वचः। दशदण्डाभ्यन्तरे राजन् भोजनं स्वर्गमुच्यते * * * * त्यज्य आत्मता भोगे नष्टः को वा हतो नृपः * * * * त्यक्त्वा स्थानं प्रलेभिरे। कुतः स्वर्गो कुतो भोगो नष्टः को वा हतो नृप। त्यक्त्वा देहं ययौ शक्तिर्मरणं तेन कथ्यते। इति बौद्धस्य राजर्षे यथा वाक्यमलोकवत्। यथा वह्नेः शिखाध्वंसं सर्वेषां ध्वंस उच्यते। इहैव नरकः स्वर्गः का कथा परजन्मनि॥

नारद उवाच। आत्मानन्दमयो जीवः कला श्रीरन्तरात्मनः। सदा जीवेति जीवेति कथ्यते तत्त्वदर्शिभिः। तत् कथमात्मनो ध्वंसो बौद्धवाक्येन भूपते। शिखाध्वंस इति न्यायादिति बौद्धस्य मूर्खता। कृते त्रेतायुगे चैव द्वापरे नृपनन्दन। विधिवत् पूजयेत् वेदं गन्धपुष्पादिभिर्द्विजः। कलिकाले महाराज ध्यानमात्रं प्रशस्यते। ध्यानं कृत्वा जपेन्मन्त्रं दशधा प्रणवं नृप। प्रातःकाले जपेन्मन्त्रं प्रणवं ब्राह्मणोत्तमः। प्रणवं वेदमन्त्रं स्यात् त्रिगुणं नृपनन्दन। प्रणवे नाधिकारोऽस्ति वेदध्यानं विना नृप। सन्ध्यायां नाधिकारोऽस्ति प्रणवैर्विहीनन्तथा। किञ्चित् किञ्चित्बौद्धमतं सर्वशास्त्रेषु पल्लवम्। आदाय पल्लवमतं * * * * परित्यजेत्। इह जन्मनि पापिष्ठः सर्वधर्मं बहिर्मुखः। स पापी जायते प्रेतः परजन्म-

नि निश्चयः । चतुर्दशपल्लवयुतो वेदो नित्यः सनातनः । षट्शाखासहितो वेदस्तत्त्वशाखाषडङ्गकः । अम्लानकुसुमन्तत्र गायत्रीतत्त्वमद्भुतम् । फलं तस्य महाराज ब्रह्माण्डं कोटिकोटिशः । नित्यं सनातनो वृत्तो मूलं तस्य च कुण्डली । ज्ञानात्मसहितं राजन् मातृकाबीजसंयुतम् । ये गुणाः सन्ति ब्रह्माण्डे तस्य पत्राणि नान्यथा । (१) * * * * * न वेदेन मुनिभिस्तत्त्वदर्शिभिः । पुरा प्राचीनवृत्तान्तं पुराणं त्रिगुणात्मकम् । रजस्तमात्मकं त्यक्त्वा यदि सत्त्वं प्रशस्यते । चतुर्दशस्कन्धहत्यां करोति स च पामरः । एकस्य बहवः पुत्राः स्वधर्मप्रतिपालकाः । तेषां मध्ये एकपुत्रश्चौर्य्यवृत्तिरतः सदा । अग्राह्यं चौरवाक्यं तत् साधुवाक्यं प्रशस्यते । वेदपुत्रा वेदहरशास्त्राणि च चतुर्दश । चौरो वै सर्वशास्त्राणां मध्ये बौद्ध इति स्मृतः । अतएव महाराज न शास्त्रेऽप्येकवाक्यता । धर्मे वेदा महाराज प्रमाणं नित्यमुच्यते । धर्मविपर्य्ययो वेदे बौद्धवाक्यं यथा तथा । अतो बौद्धेति राजेन्द्र गीयते तन्त्रकोविदैः । बलिदानं वेदसिद्धं निषिद्धं बौद्धवाक्यतः । बौद्धवाक्यं परित्यज्य वेदमार्गं प्रपूजयेत् । निर्माय गोमयं पिण्डं पौषे पौषप्रपूजनम् । येन यत् क्रियते धर्मः स्त्रीसपर्य्यापरम्परा । सर्वं वेदमयं राजन् तत्र निद्रां परित्यजेत् । अतएव महाराज शरीरे तव विद्यते । पशुहत्याकृतं पापं मांसभक्षणकारणम् । विद्यते तव यत् पापं प्रायश्चित्तं ब्रवीमि ते । लक्षच्छागबलिं दत्त्वा तत् पापं माजयाधुना ॥

श्रीदेव उवाच । इत्युक्त्वा प्रययौ विप्रो नारदो ब्रह्मनन्दनः । ततः सुरथराजर्षिः सम्पूज्य बलिदानतः । निष्पापः सुरथो भूत्वा सशरीरो दिवं गतः । सस्त्रीकः स महाराजः प्रययौ स्वर्गमन्दिरम् । तथापि सुरथस्कन्धो ववृषे पथि पापतः । स्कन्धे विस्फोटकमभूत् कृमियुग्मं नृपस्य च । विस्फोटकविषज्वाला कृमिज्वालाथ जायते । बलिदानं विना हत्याज्वालारूपा उपस्थिता ॥

एतस्मिन् समये दूत उवाच * * * * इयं मन्दाकिनी गङ्गा जलरूपा सनातनी । वेदोक्तविधिना राजन् स्नानमत्र कुरु द्रुतम् । तच्छ्रुत्वा वचनं तस्य राजा सुरथः * * * * * । विधिवत् स्नात्वा दिव्यदेहमवाप्नुयात् । कृमिरूपाश्च स पापाद्दिव्यदेहमवाप्नुयात् । सुवर्णरथमारुह्य दिव्यस्त्रीपरिवेष्टितः । सस्त्रीकः सुरथो राजा प्रययौ स्वर्गमन्दिरम् । ते पापाः प्रययुः शीघ्रं प्रययौ स्थानमुत्तमम् । बलिदानं विना हत्या हत्या सर्वत्र गर्हिता । प्रसङ्गात् कथिता हत्या बलिदानं विना यथा ।

इति गायत्रीतन्त्रे आगमसन्दर्भे ज्ञानदर्पणे श्रीदेवदेवीसंवादे आत्मज्ञाननिरूपणे गायत्रीब्राह्मणे पञ्चमपटलः समाप्तः ।

* समाप्तश्चायं ग्रन्थः *

---

(१) तारकाचिह्नितस्थलं दुष्प्राप्यम् ।

## अस्मत्प्रकाशित-धर्मशास्त्र-कर्मकाण्ड-ग्रन्थाः—

१ अग्निष्टोमपद्धतिः। "आध्वर्यवपद्धतिः" "औद्गात्रपद्धतिः"-"हौत्रपद्धतिश्च"-सन्निविष्टाः १-२ खण्ड ३)
२ अष्टादशस्मृतिः। मूल। अङ्गिरादि अष्टादश स्मृतिसंग्रहरूपो ग्रन्थः १॥)
३ आपस्तम्बगृह्यसूत्रं। अनाकुला-तात्पर्यदर्शनी-व्याख्यायुतं ४॥)
४ आपस्तम्बधर्मसूत्रम्। उज्ज्वलावृत्त्या सहितम् ४॥)
५ कात्यायनश्रौतसूत्रम्-कर्कभाष्य सहितम्। सम्पूर्णम् १३)
६ कृत्यसारसमुच्चयः। गङ्गाधरमिश्रकृत टिप्पणीपरिशिष्ट युतः ३॥)
७ गोभिलगृह्यसूत्रम्। म०म०मुकुन्दशर्मकृत "मृदुला" व्याख्या युतं ३॥)
८ तिथिनिर्णयः। भट्टोजिदीक्षितकृतः, नागोजिभट्टकृतश्च १॥)
९ निर्णयसिन्धुः। कृष्णंभट्टकृत व्याख्या सहितः २२)
१० पारस्करगृह्यसूत्रम्-मूल टिप्पणी युक्तम्। ॥=)
११ पारस्करगृह्यसूत्रम्। हरिहर-गदाधर-जयरामभाष्ययत्र युतं ३)
१२ पौरोहित्यकर्मसारः। परिवर्द्धित संस्करणः। संपूर्णः १।)
१२ बौधायनधर्मसूत्रम्। श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम् ४॥)
१३ याज्ञवल्क्यस्मृतिः। 'वीरमित्रोदय' 'मिताक्षरा' द्वयोपेता ७)
१४ याज्ञवल्क्यस्मृतिः। 'बालम्भट्टी' 'मिताक्षरा' टीका व्य० अ० १६॥)
१५ लाट्यायनश्रौतसूत्रम्। अग्निष्टोमान्तम्। सटीकम् २।)
१६ वर्षकृत्यदीपकः। म० म० श्रीनित्यानन्दपन्त पर्वतीयकृतः ४)
१७ संस्कारदीपकः। ,, ,, प्रथमो भागः ३॥)
१८ वास्तुपूजापद्धतिः। गृध्रादिपतनशान्तिपद्धतिः-गृहप्रवेशपद्धतिश्च सहिता ।=)
१९ वीरमित्रोदयः। म०म० मित्रमिश्रविरचितः। परिभाषाप्रकाशः-संस्कारप्रकाशश्च १६॥) आह्निकप्रकाशः ६) पूजाप्रकाशः ६) लक्षणप्रकाशः १०॥) राजनीतिप्रकाशः ७॥) तीर्थप्रकाशः ८) व्यवहारप्रकाशः ६) श्राद्धप्रकाशः ६) समयप्रकाशः ४॥) भक्तिप्रकाशः ३) शुद्धिप्रकाशः ४॥) संपूर्ण ८५॥)
२० व्रात्यताप्रायश्चित्तनिर्णयः तथा-व्रात्यताशुद्धिसंग्रहः १॥)
२१ श्राद्धकल्पलता। श्रीनन्दपण्डितकृता ४॥)
२२ श्राद्धपद्धतिः। म० म० वाचस्पतिमिश्रकृता परिशिष्ट सहिता १॥)
२३ श्राद्धचन्द्रिका। भारद्वाज दिवाकरभट्टनिर्मिता ३)
२४ श्रौत्रसूत्रम्। कात्यायनप्रणीतं देवयाज्ञिकपद्धति सहितम् ९)
२५ षडशीतिः। शुद्धिचन्द्रिकाख्यव्याख्यया समलंकृता २)
२६ संस्कारगणपतिः। पारस्करगृह्यसूत्रस्यातिविस्तृतव्याख्यानस्वरूपा १५)
२८ स्मृतिसारोद्धारः। अत्युत्तमोऽयं धर्मशास्त्रग्रन्थः ६)

---

## अस्मत्प्रकाशित-वेदान्तग्रन्थाः ।

१ अद्वैतसिद्धिसिद्धान्तसारः । सदानन्दव्यासप्रणीतः तत्कृतव्याख्या च ४॥)

२ ब्रह्मसूत्रवृत्ति । ( मरीचिका ) ३)

३ खण्डनखण्डखाद्यम् । "खण्डनभावप्रकाशिका" "शाङ्करी" "खण्डनभूषामणि" 'खण्डनदर्पण" "खण्डनरत्नमालिका" पञ्चटीका समेतम् ६॥)

४ खण्डनपरिशिष्टम् । श्रीताराचरणशर्मणा विरचितम् । ॥)

५ जीवन्मुक्तिविवेकः । विस्तृतसरल भाषानुवादेन सहितः । २)

६ तत्त्वदीपनम् । अखण्डानन्दमुनिकृतं (पञ्चपादिकाविवणस्य व्याख्यानं) ८)

७ तत्त्वत्रयम् । लोकाचार्यप्रणीतं । वरवरस्वामिनिबद्धभाष्योपबृंहितं २॥)

८ तत्त्वशेखरः । ,, तथा वरदगुरुकृतः तत्त्वत्रयचुलुकसंग्रहः १॥)

९ न्यायपरिशुद्धिः-सटीक । श्रीवेदान्ताचार्यप्रणीता । ७॥)

१० न्यायमकरन्दः-सटीक । प्रमाणमाला-न्यायदीपावली युतः ६)

११ प्रणवकल्पः । "प्रणवकल्पप्रकाशाख्यभाष्य" समलंकृतः १॥)

१२ श्रीभाष्यवार्तिकं-यतीन्द्रमतदीपिका सकलाचार्यमतसंग्रहश्च ३)

१३ वेदान्तरत्नमञ्जूषा तथा वेदान्ततत्त्वबोधः । सम्पूर्णः ३)

१४ वेदान्तसिद्धान्तसङ्ग्रहः तथा-वेदान्तकारिकावली "अध्यात्मसुधातरङ्गिणी" टीकायुता ४॥)

१५ वेदान्तदर्शनम् । "ब्रह्मामृतवर्षिणी" टीका सहितम् ६)

१६ वेदान्तपरिभाषा । "अर्थदीपिका" टीका-टिप्पणी सहिता । १)

१७ श्रुत्यन्तकल्पवल्ली । पुरुषोत्तमप्रसादकृत सम्पूर्णा । ४॥)

१८ श्रुत्यन्तसुरद्रुमः । तथा-श्रुतिसिद्धान्तमञ्जरी । व्रजेश्वरकृता । ४॥)

१९ पञ्चीकरणम् । "वार्तिक" टीका 'तत्त्वचन्द्रिका' 'विवरणेन' च सहितम् ॥)

२० बोधसारः । श्रीनरहरिकृतः, तच्छिष्य दिवाकरकृत टीकया सहितः १५)

२१ भेदधिकारः-सटीक । अप्पयदीक्षितविरचित "उपक्रमपराक्रमश्च" ३)

२२ विवरणोपन्यासः । "वाक्यसुधा" ब्रह्मानन्दी व्याख्यासहितः । ३)

२३ सिद्धान्तबिन्दुः-न्यायरत्नावली-नारायणीटीकोपेतः । ४)

२४ संक्षेपशारीरकम् । रामतीर्थकृत 'अन्वयार्थबोधिनी" टीका सहितम् ८)

२५ संक्षेपशारीरकम् । "मधुसूदनी" टीकासहितम् । ८)

२६ स्वानुभवादर्शः-सटीक । 'अनुभूतिलेश' समेतः । ३)

२७ श्रीमत्सनत्सुजातीयम् शङ्करभाष्य "नीलकण्ठी" व्याख्याद्वयसमेतं १)

२८ हरिलीलामृतम् । मधुसूदनीटीकासहितं । १॥)

२९ श्रीविद्वन्मण्डनम् । पुरुषोत्तमजीकृत "सुवर्णसूत्र" व्याख्यासहितं ३॥)

३० प्रस्थानरत्नाकरः । गोस्वामी पुरुषोत्तमजी कृतः सम्पूर्णः ३)

३१ शुद्धाद्वैतमार्तण्डः । "प्रकाश" "प्रमेयरत्नार्णव" टीकाद्वयोपेतः १॥)

३२ श्रीमदणुभाष्यम् । गोस्वामि पुरुषोत्तमजीकृत "प्रकाश" व्याख्यासहितं २२॥)

---

प्राप्तिस्थानम्—चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी ।